*Sources of Indo-Aryan Lexicography*

9

# NĀNĀRTHAMANJARĪ.

OF

# RĀGHAVA

Critically edited

BY

PT. K. V. KRISHNAMOORTHY SHARMA.

DECCAN COLLEGE
Post-Graduate and Research Institute
POONA.

# NĀNĀRTHAMANJARĪ

OF

# RĀGHAVA

CRITICALLY EDITED BY

**K. V. KRISHNAMOORTHY SHARMA.**

Vyâkarana Vidvan (Mysore), SHASTRI,

*Department of the Dictionary of Sanskrit*
*on Historical Principles.*
*Deccan College Post-Graduate and*
*Research Institute, Poona.*



POONA

1954

# किंचिन्निवेदनम्

संस्कृतभाषायां परिनिष्ठितां व्युत्पत्ति प्रेप्सता कोशग्रन्थेषु विशेषतः परिशीलनं सुतरां नान्तरीयकमित्यत्र शक्तिग्रहोपायेषु कोशस्याप्यन्यतमत्वप्रतिपादकं शास्त्रकृतां वचनमेव पर्याप्तं प्रमाणम् । अतः साम्प्रतमिदं साम्प्रतं यदत्र दक्षिणमहाविद्यालये (डेक्कन कॉलेज) संस्कृताङ्ग्लमहाकोश-संपादनप्रसङ्गे प्राक्कविसहब्धानां बंहीयसामद्य यावदप्रकाशितानां कोशानां परिष्कृत्य प्रकाशन-व्यतिकरे निर्वाहकाणामाज्ञानुसारेण पण्डिताः प्रावर्तिषत । तत्र नानार्थमञ्जर्याख्यकोशसंशोधने जनोऽयं प्रावृतत् ।

पर्यायशब्दप्रतिपादकत्वेनानेकार्थशब्दसंग्रहरूपतया च कोशा द्वैविध्यं प्रतिपद्यन्ते । अमरकोश-वैजयन्ती-हलायुधप्रभृतयः प्रथमे वर्गे मेदिनीशाश्वतानेकार्थसंग्रहादयो द्वितीये चान्तर्भवन्ति । तत्र द्वितीयवर्गे परिगणनीयेयं नानार्थमञ्जरी ।

अस्य कोशस्य प्रणेता राघवः कस्मिन्नभिजने कतमस्मिन्काले प्राणिति स्मेति शृङ्गग्राहिकतया निर्देष्टुं न किमपि नः प्रमाणमुपलभ्यते । नामान्वयाभिजनोल्लेखनकविजनसमयानुसारेण वा नायं स्वसंदर्भस्य प्रक्रमे किमप्युल्लिखति । केषांचित्कोशकाराणां निर्देशोऽप्यत्र विचिकित्सां न शमयितुं प्रकल्पते । अथापि प्रतिपादयिष्यमाणविषयाणां सूक्ष्मेक्षिकया विमर्शनेन नानार्थरत्नमालायाः प्रबन्धुरिरुगप्पदण्डाधिनाथस्य समकालिकस्ततोऽप्यर्वाचीनो वायं राघवो भवितुमर्हतीति कथंचिन्न-स्तर्कः । दण्डाधिनाथसमयस्तु चतुर्दशस्य शतकस्य चरमभागे इति चरित्रविमर्शकाराणां कृतान्तः । ळकारान्तानां क्षकारान्तानां च शब्दानां हकारान्तशब्दप्रघट्टकोपरि संनिवेशः राघवस्य दाक्षिणा-त्यत्वं विवरीतुमलम् । दाक्षिणात्यवर्णमालायास्तथात्वात् । किञ्च शब्दानां आदिमवर्णेन वान्तिमवर्णेन वा क्रमिकत्वेन प्रदर्शनं विमुच्य, नानार्थार्णवसंक्षेपवन्नानार्थरत्नमालावच्च यथाभिलषितप्रदेशसंवेक्षन-मप्यत्र साधकं भवति ।

अस्य कोशस्य संशोधनोपक्रमे तदौपयिकतयास्माकं मातृकाद्वयमेव प्रथममुपलब्धम् । ततः किंचित्कालानन्तरं मातृकात्रयमिति पञ्चभिर्मातृकाभिरिदं कार्यं निर्वर्तितम् । तत्र मातृकाणां A B C D E इति विहितसंज्ञानां विवरणं यथाः—

A — Belongs to Oriental Institute, Baroda; Number 7891 – size $9 \times 1\frac{3}{4}$ inches palm-leaf Manuscript. Contains 11 leaves written on both sides. Each page contains about 9 lines and 26–30 letters in a line. — Author : Rāghava, Scribe Rāma; Script Grantha.

B = Belongs to Oriental Institute, Baroda, Number 7858, — size $9 \times 1\frac{3}{8}$ inches. Contains 75 leaves ( numbered 42–116 ). Written on both sides. Each page contains about 8–10 lines and 25–32 letters to a line. — Author : Rāghava; Scribe Cakkingal Ereccan; Script Malayalam. Handwriting from 7th leaf is hasty.

C = Belongs to Adyar Library, Madras, 33 I 24, No. 824 in Descriptive Catalogue of Manuscripts, Adyar series No. 60. Size $16\frac{1}{10} \times 1\frac{2}{10}$ inches. Contains 38 leaves written on both sides. Each page contains the leaf-numbers from अ—अः, क—क. Script Grantha.

D=Belongs to Adyar Library, Madras. 28 A 77, No. 823 in Descriptive catalogue of Manuscripts, Adyar series No, 60. size 15×1⅛ inches. Contains 54 leaves written on both sides. Script : Grantha.

E=Transcription in Devanāgarī from a palm-leaf Manuscript from Oriental Research Institute, Madras.

K=A palm-leaf Ms consulted to verify a few readings here and there. Belongs to Dr Kuñjan Rāja, brought for a short time through Dr Rāghavan Not collated.

तत्र प्रथमं प्राङ्निर्दिष्टानुसारेण AB संज्ञितमातृकाद्वयाधारेण सज्जीकृते ग्रन्थे CDE संज्ञिताः पश्चादुपलब्धाः । पर सर्वा अपि मातृका लेखनप्रमादभूयिष्ठतायामैकरूप्यं प्रतिपन्नाः संशोधनकर्मणि न नः प्रतीक्षित साह्य वितरीतु प्राभूवन्निति तासा गतानुगतिकतया समानमूलकत्वं तर्कयामः । तत्र पर्याप्तप्रमाणमन्तरा शब्दानामावापोद्वापविषये नः प्रवर्तनमसाप्रतमिति मूलग्रन्थः प्रायस्तथैव निर्दिष्ट. । अथापि कोशान्तराणां पर्यालोचनतः शब्दाः शब्दान्तरैः व्यत्यस्तीकृता इति शब्दसूचीतोऽवगन्तव्यम् । कानिचिदुदाहरणानि प्रतिपादयामः ।

1 पङ्क्तौ सर्वास्वपि मातृकासु सृदाकु शब्दस्थाने ‘ सृपा ’ इति वर्णद्वयमेवोपलभ्यते । तृतीयवर्णो विनष्टः । एकवर्णस्यावकाशश्च विनिर्दिष्टः । इदकोशमुद्रणान्तर चेन्नपुरीतः परीक्षार्थमानीते K संज्ञितकोशेऽपि* तृतीयवर्णस्यैव लोपो दृष्ट इति महदिदं विस्मयस्थानम् । ‘सृदाकु’ शब्दश्च मेदिनी ( 14-170 ), विश्वलोचन ( 28-169 ), अनेकार्थसंग्रह ( 57-108 ) कोशाना साह्येन निर्धारितः ।

271 पङ्क्तौ उन्नतेऽप्यथ गोनाभे इति पाठः अशुद्धः । तत्र ‘ उन्नतेऽप्यथ व्यङ्गो ना भेके ’ इति पठनीयम् । एतत्संस्थाद्वारा प्रकाशितनानार्थरत्नमालोपयुक्त * A2 मातृकायामपि गोनाभे इति पाठो दृश्यते ( १५ पुटे ) । वस्तुतस्तु मातृकालेखकानामनवधानमूलिकेयमपूर्वा ‘ गोनाभे ’ इति शब्दसृष्टिः । परसवर्णघटिततया निर्देष्टव्यशब्दानामखण्डानामपि अनुस्वारवत्तया लिखतां, वर्तुलाकाराणां चानुस्वाराणां शब्दसमनन्तरमेव निर्दिशता प्रमादेन ‘ थ ’ वर्णं परित्यज्य भेकशब्दैकदेश ‘ भे ’ वर्णस्य द्विरुल्लेखेन च ‘गोनाभे’ इति शब्दाभासः समुदभूदिव । अतश्चात्र ‘ उन्नतेऽप्यथ व्यङ्गो ना भेके ’ इत्येव साधीयान्पाठः ।

365 पङ्क्तौ, ‘ कूर्चे ’ शब्दस्य पीठवाचकत्व नानार्थरत्नमालायाः साह्येन निरणायि । A2 मातृकायामपि ‘ पीते ’ इत्यपशब्दः संदृश्यते ।

367 पङ्क्तौ, ‘ वेदान्ते ’ इत्यपशब्दः सर्वमातृकासाधारणोऽप्यशुद्धः । स्त्री त्रोटौ चञ्चुरेरण्डे इति रत्नमाला ( पं. 289 ) । चञ्चुः स्यात्त्रोटौ *वेरण्डे इति नानार्थसंग्रहः । चञ्चुस्त्रोटौ च वेतण्डे इति A2 मातृका । परं अमरकोशानेकार्थसंग्रह ( 7. 59 ) विश्वलोचन ( 61. 5 ) प्रभृतिकोशसाह्येन ‘ एरण्ड ’ इति पाठः साधुत्वेन निरचायि ।

727-8 पङ्क्त्योः, वनिताशब्दस्यार्थः प्रमादत्वेन निर्दिष्टः । तत्र हि ‘ वनिता जातरागस्त्रीस्त्रियोस्त्रिषु च याचिते ’ इति मेदिनी ( 65. 150 ), ‘ वनिता जनितात्यर्थरागयोषिति ’ इति विश्वलोचनः ( 145.156 ) ‘ वनितोत्पादितात्यर्थरागनार्यपि नार्यपि ’ इत्यनेकार्थसंग्रहः

---

* डा. कुञ्जनराजस्येय मातृका कुचिरपरीक्षिता । अथापि न निस्तारः । अनेनोदाहरणेन सर्वमातृकाणामेकमूलकत्वं विभावितम् । * इयं A2 मातृका नानार्थरत्नमालायाः नानार्थमञ्जर्याश्च संघातरूपेति निर्देक्ष्यते ।

( 73. 312 ), उत्पादितानुरागा स्त्री-इति शाश्वतश्च । अतोऽत्र 'जनिता च ते । अबलात्यंर्थरागेषु' इत्यत्यन्ताशुद्धो ग्रन्थः ।

922 पङ्क्तौ, ' निपाते ' इत्यशुद्धः पाठः । तत्र ' नीवाके ' इति शुद्धपाठः विश्वलोचन- ( 182. 40 ) मेदिनी ( 181. 39 ) साह्येन संगृहीतः ।

995-6 पङ्क्तिद्वयेन व्यत्यस्तेन भाव्यम् । ' अर्जुनी ' शब्दश्चात्र मुख्यत्वेन बोध्यः । तत्र च ' उमायां ' इत्यत्र ' उषायां ' इति भाव्यम् । 996 पङ्क्तौ दृष्टानां अर्थानामर्जुनीशब्द- वाच्यत्वात् । इद शुद्धिपत्रे द्रष्टव्यम् । इद शब्दरत्नसमन्वयकोशपर्यालोचनेन निश्चितम् ।

1167 पङ्क्तौ, ' सोमनि ' इत्यशुद्धम् । ' कुसुम्भ हेमनि महारजते ' इति मेदिनी ( 107. 15 ), विश्वलोचनश्च ( 239. 16 ) । महारजन कुसुम्भं इति शाश्वतश्च । अतः ' हेमनि ' इति साधुः ।

1183 पङ्क्तौ, श्यामशब्दः वृद्धदारकवचनः । °वृद्धेषु दारके इति त्रुटितो ग्रन्थः । अनेकार्थसंग्रह ( 29. 342 ) मेदिनी ( 110 31 ) विश्वलोचन ( 246. 33 ) कोशैः अयमर्थो निश्चितः । शब्दरत्नसमन्वये तु वृद्धदारौ इति दृश्यते ।

1298 पङ्क्तौ, बुध्न्ये इति कश्चन सदिग्धः शब्दः । चैत्यशब्दस्य बुद्धबिम्बार्थकत्वं कोशा- न्तरतः विज्ञायते । अतः ' बिम्बे ' इत्यस्य विशेषणत्वेन कश्चिदयमपशब्द इति विज्ञायते ।

1345 पङ्क्तौ, ' निष्क्रिया ' इति स्थाने ' निष्क्रम ' इति साधुः । यकारान्तप्रकरणे चास्य संनिवेशो न युज्यते । यतः, ' निष्क्रमो निर्गमे बुद्धिसपत्तौ दुःकुलेऽपि च ' इति विश्व- लोचनः ( 249. 50 ) अनेकार्थसग्रहश्च ( 87. 496 ), ' निष्क्रमो बुद्धिसपत्तौ निर्गमे दुष्कुलेऽपि च ' इति मेदिनी (111. 45 )–शब्दरत्नसमन्वयौ ( °ले तथा, 228. 19 ) । अजयस्तु ' निष्काम ' ( 52. 8 ) इति पठति । ' धीसामर्थ्येऽपि निष्क्रमः इति नानार्थरत्नमाला ( प. 1763 ) । अमरकोशटीकायां भानुजी चोल्लिखति ' निष्क्रमो निर्गमे ख्यातो बुद्धिसंपदि निष्क्रम इति रुद्रः ' इति ( N. S Ed Bombay 1944, page 393, Sl. 25 )

1392-3 पङ्क्तिद्वय व्यत्यस्तीकृत्य पठनीयम् । शब्दरत्नसमन्वयसाह्येन निर्णीतमिदम् ।

1455 अत्र सर्वमातृकोपलब्धोऽपि ' क्षेत्रे ' इत्यशुद्धः पाठः । तत्र ' शक्रो ' इति मुख्यः शब्दः शुद्ध इति निश्चितः । यतः, ' शक्रोऽर्जुनतराविन्द्रे कुटजे ' इत्यनेकार्थसग्रहः ( 38 472 )। ' शक्रौ कुटजवासवौ ' इति शाश्वतः ( 617 ) । ' शक्रः कुटजवृक्षे च महेन्द्रेऽपि ' इति नानार्थार्णवसक्षेपः ( I. 31. 119 ) ' शक्रः पुमान्देवराजे कुटजार्जुनभूरुहोः ' इति मेदिनी ( 129. 87 )। अतश्च ' क्षेत्रे ' इत्यसंगतः पाठः ।

1512 विधुरस्त्वरिते इत्यारभ्य, 1514 पङ्क्तौ ' अपत्नीके ' इत्यन्तग्रन्थमध्ये ' विदुर ' इति कश्चिन्मुख्यशब्दो निगीर्णः । तत्र धीरे ( अवग्रहः प्रमादपतितः ), नागरे, कौरवामात्ये च विदुर इति अन्येष्वर्थेषु विधुर इति च मुख्यौ द्वौ शब्दौ इष्येते इति कोशान्तरपर्यवे- क्षणेनाध्यवसीयते ।

1548 अत्र ' शारीरः क्षोभकरणे ' इत्यशुद्धः पाठः ' शारिरक्षोपकरणे ' इति स्थाने संभूतः । त्र्यक्षररेफान्तशब्दप्रघट्टके चैवमुल्लेखेन सत्य प्रतारिता वयम् । शारिशब्दः प्रथमं 1481 पङ्क्तौ सकृन्निर्दिष्ट एव । अत्र त्वस्य पुनरुक्तिः । लेखकानामनवधानेन शारीरः क्षोभकरणे इति सर्वमातृकास्वप्युपलब्धः । शब्दरत्नसमन्वयेनायं दोषः कथंचित्परिहृतः ।

1712-3 अत्र पेशल शब्दस्य वाच्यत्वेन प्रदत्तेषु मुसले, हरे, कोकिले इति त्रयः शब्दाः प्रमादजनिताः । 'हरे' इति स्थाने हले इति भाव्यम् । 'कोकिले' इति चासबद्धः पाठः तत्स्थाने च गोकिल इति केनचिन्मुख्यशब्देन भाव्यमिति भाति । पर मुसल-हलवाचकस्य गोकिल-शब्दस्य 'मृदुल' वाचकत्वाभावेन, पेशल शब्दस्य मृदुलवाचकत्वेन च ग्रन्थ एव किमपि वैकल्यं प्रतिपन्न इति विज्ञायते । यतः

'अथ गोकिलः । मुसले लाङ्गले चापि' इत्यनेकार्थसंग्रहः ( 101.680-1 ), 'गोकीलो मुसले हले' इति मेदिनी ( 151 85 ) शब्दरत्नसमन्वयश्च ( 304.16 )। 'गोकिलो मुसले सीरे' इति विश्वलोचनः ( 344 88 ) । शब्दरत्नाकरोऽपि । 'गोकीलो मुसले सीरे' इति नानार्थार्णव-संक्षेपः ( II. 18 82 ) । अतश्चात्र ग्रन्थः परिभ्रमजनकः ।

1776 अनेकार्थसंग्रह ( 176 742 ) मेदिनी ( 106 39 ) नानार्थसंग्रह ( 60.42 ) ( 366 40 ) शब्दरत्नसमन्वय ( 320 18 ) कोशेषु विस्तरशब्द उपलभ्यते ।

1811 प्रकाशशब्दस्य 'स्फुटं' इत्यर्थः कोशान्तरेषु दृष्टः । अतोऽत्र कोशवत्यपि इति स्थाने काशवत्यपीति समञ्जसम् ।

1827 अत्र पङ्क्तौ मुख्यः शब्दो नोपलभ्यते ।

1916 अत्र तृष्णातिरेके इति शुद्धः पाठः विभाव्यते । 'कृष्णातीरे' इति सर्वमातृका-साधारणः अशुद्धः पाठः ।

1967 'सरळ' शब्दस्य ऋजुरित्यर्थः नानार्थार्णवसंक्षेपे ( II. 213.1904 ) अनेकार्थसंग्रहे ( 105.727 ) च दृश्यते । अतोऽत्रत्यः 'रज्जौ' इति पाठः असंबद्धः ।

1994 कक्षा स्पर्धापदेऽपि च इति शाश्वतः ( 771 ) । स्पर्धास्पदे इति तु न सांप्रतम् ॥

इत्थं न्यूनातिरेकाः सर्वमातृकासाधारणा उपलभ्यन्ते तत्र तत्र । दिङ्मात्रं तु सूचितम् । अस्त्विदम् ।

* नानार्थरत्नमालाख्यस्य इरुगप्पदण्डाधिनाथप्रणीतकोशस्यास्य कोशस्य च भूयः साम्य-मुपलभ्यते । तत्र न केवलं रत्नमालागता भूयस्यः पङ्क्तयः मञ्जर्यामुपलभ्यन्ते किं तु रत्नमाला-प्रकाशनाय परीक्षितायां A2 संज्ञितमातृकायामधिकांशतया निर्दिष्टाः प्रायः सर्वा अपि पङ्क्तयः मञ्जर्यामुपलभ्यन्ते । मुख्यशब्दाना तदर्थानां च वर्णनावसरे A2 मातृकायां दृश्यमानाः पाठभेदा अप्यधोनिर्दिष्टाः मञ्जर्यामुपलभ्यन्ते । इद सर्वं परिशिष्टे प्रदर्शितकोष्ठिकायां प्रदर्श्यते । एतेनोह्यते यदियं A2 मातृका कोशद्वयस्यास्य समष्टिरूपस्य कस्यचिन्मूलकोशस्य प्रतिकृतिरिति । अपरः कश्चिद्विशेषः । दण्डाधिनाथस्य रत्नमालाया दृश्यमान षण्णां काण्डाना विभागक्रममुत्सृज्य एका-क्षरकान्ता द्व्यक्षरकान्ता इत्यादिक्रमेण प्रकरणविभाग प्रतिपन्ना A2 मातृका विशेषतः मञ्जर्या संबन्धमनुभवति । इदं च प्रतिप्रकरणोपसहार पुष्पिकाभ्योऽवगम्यते । एवमादि निध्यायतां नः प्रस्फुरति यत्कोशद्वयमिद संपुटित स्वमूलभूत कोशान्तरं किंचिदासीदित्यनुमापयतीति ।

तत्र मञ्जरी-रत्नमालयोः साधारण्यः पङ्क्तयः प्रथमं प्रदर्श्यन्ते । तत्र प्रथमसंख्याः मञ्जर्या द्वितीयाश्च रत्नमालाया इति विवेकः । ता यथाः—

* Dr. B R. Sharma's edition, Deccan College, Poona.

एकाक्षरशब्देषु समानाः पङ्क्तयः—

12=26, 21=35, 30-1=44-5; 35-6=49-50; 39=53, 331=66; 345=68, 371=72, 383=74, 385-75, 437-8=82-3; 535=93; 537=94A; 828=101; 832=104; 1087=112; 1089-90=114-5, 1123-24=120-21; 1135=123, 1137=125, 1370-1=135-6, 1725-7=147-9; 1729=151; 1934-5=169-70; 1985-6=173-4

किंचिन्मात्रभेदेन साम्यभाजो यथाः—

18=30, 23=37; 25=39, 27-9=41-3, 32-3=46-7, 37-8=51-2; 41-2=55-6, 332=67, 382-3=73-4, 499=86, 502=88; 536=94; 830-1=102-03; 880=107, 1086=111; 1114-6=116-8; 1121=119; 1134-5=122-3, 1170-3=126-9, 1256-7=130-1; 1259=133, 1372=137; 1374-9=139-44, 1614=145, 1731-32=153 and 155, 1932-5=167-70.

एवं द्व्यक्षरशब्दप्रकरणेषु साम्यभाजो यथाः—

70=197; 81=205; 82=206, 272=267, 285=237; 305=256; 306=257; 354=279; 356=281; 372=294.

किंचिद्भेदेन यथाः—

72=198; 80=204; 83=207, 84=208, 88=213; 224=218; 236=229; 337=274, 380=295; 388=299; 1631=1001.

विस्तरभयादेव दिङ्मात्रं सूचितं न तु सर्वं प्रपञ्चितम्। नानार्थमञ्जर्यामुपलब्धाः कोशान्तरेष्वनुपलभ्यमानाः केचन शब्दाः तवकः (157) चातुरीकः (201) आहसः (1913) रागराजः (424) कुकरक्छटः (483) पट्ण (1368) इत्यादयः। अस्मिन्कोशे मन्दिरेऽऽश्रमे (ये) (72) गुप्तिरक्षणे (692) हर्म्येन्द्र (186) उद्वर्तोत्तानिते (787) अवधूतोपेक्षिते (795) राजदेयम° (1437) इत्यादयः संधिदोषाः; यशसिवार्तयोः (706) रहसिदम्भयोः (1279) इत्यादयः समासदोषाः पतिशब्दसप्तम्येकवचने पतौ (679, 963, 1162 1295, 1433, 1464, 1744, (1824) इति 'विद्वासे (1157) इति, राजानां (1034) इत्यादयः शब्ददोषाः तथा रचनादोषाश्च बहवो दृश्यन्ते। सर्वास्वपि मातृकासु सर्वास्वपि पुष्पिकासु राघवीये नानार्थमञ्जर्यामित्येव दृश्यते।

श्लेष (72) शैलूष (81) पत्रि (224) स्थान (287) इत्यादयः केचन शब्दाः नानार्थमञ्जर्यां A2 मातृकायां च दृष्टाः, अथापि तेषा स्थाने शब्दान्तराणि 'रत्नमाला' साह्येन निवेशितानि। रत्नमालायामदृष्टाः मञ्जर्यां A2 मातृकायां च केवल दृश्यमानाः केचन शब्दाः "लक्षणं, निदाघः, चक्षुस्, उदन्तः, मङ्गल्य, निष्क्रयः (निष्क्रिया) उपस्पर्शनं इत्यादयः॥

अकाराद्यनुक्रमेण शब्दसूचीसंग्रहविषयेऽपि नव्यः कश्चित्पन्था अनुसृतः। ऊष्मवर्णपरकाणामनुस्वाराणामिव शब्दद्वयमध्यपतितानां तेषा कदाचिदिच्छानुसारेण परसवर्णीकरणरूपदाक्षिणात्यार्धजरतीयसरणिं परित्यज्यानुस्वारा एव प्रदर्शिताः। अनुस्वारोल्लेखनपद्धत्यनुसारेणापि तेषां परसवर्णघटितोच्चारणस्मरणवासनावशेन तत्तद्वर्गानुसारेण शब्दानां सनिवेशसंप्रदायः बह्वादृतोऽपि निष्प्रमाणत्व तस्योत्पश्यद्भिरस्माभिर्नादृतः। अतश्च सौकर्यानुसारेण सानुस्वारवर्णानामेकत्रैव संनिवेशः नव्यतरसंप्रदायानुरोधीति स एव स्वीकृतः। तत्र च प्रथमं शब्दास्ततो लिङ्गमर्थः

पङ्क्तिसंख्या चेति क्रमः । परिशोधितशब्दाश्च कुण्डलीकृताः । तत्र कुण्डलान्तर्गतशब्दानुसारेण चार्थाः प्रदर्शिताः । मुख्यशब्दाः स्थूलाक्षरैरर्थनिर्देशकशब्दाश्च लघ्वक्षरैर्मुद्रिताः । संदिग्धाना चार्थानां आङ्ग्लभाषाया नानुवादः कृतः । तत्र प्रश्नचिह्नद्योतक(?)रेखा प्रदर्शिता । पङ्क्तिसंख्याश्च केवलं प्रदत्ताः । विशेषतः शोधनं तु परिशिष्टतया योजित (Critical Notes) स्थलेनावगन्तव्यम् ।

अमरकोशादिष्विव शब्दानां याथातथ्येन लिङ्गविशेषनिर्णायकापारिभाषिकश्लोकाना-मस्मिन्कोशेऽनुपलम्भेन कुचित्कुचिल्लिङ्गनिर्देशस्य चास्फुटत्वेन, वाच्यशब्दाना च निर्नियमं वाचकानां पूर्वं पश्चाद्वा निर्देशेन बहुधा भ्रमापादकस्यास्य कोशस्य संशोधने मानुष्यकं न्यूनत्वं प्रेक्षमाणाः संख्यावन्तः क्षन्तुमर्हन्ति । परिशिष्टप्रकरणे यावच्छक्यं प्रमादपरिहाराय यत्ने कृतेऽपि संदिग्धार्थशब्दानामाङ्गलानुवादराहित्य संशोधनस्य सावशेषत्वं पिशुनयति ।

अन्ते चैतद्ग्रन्थसशोधनविषये बहुधा औचित्यप्रदर्शनेन मार्गप्रदर्शनेन चोपकृतवतां श्री. सु. मं. कत्रे महोदयाना तथा श्रीयुत ए. द. कुलकर्णी–म. मं. पाटकर महोदयाना–प्राचार्य V. A. रामस्वामिशास्त्रिणा, तथा मातृकाप्रदानसाह्यकृता, यथोचितकाल चास्य संमुद्रणेनोपकृतवतां आर्यसंस्कृतिमुद्रणाधिकारिणा च नितान्तं कृतज्ञता प्रदर्शयन्नुपसजिहीर्षामि ।

इत्थं विद्वज्जनावधेयः,
क. वे. कृष्णमूर्तिशर्मा

---

**Abbreviations of Works Utilized for this Edition.**

AK = Amarakośa text with Maheśvarī com. and Bhānuji's Com. N. S. Press Bombay.
AS = Anekārthasamgraha, Kashi Sanskrit Series No. 68 Benares 1929.
AT = Anekārthatilaka of Mahīpa, Deccan College Poona, 1947.
MED = Medinīkośa, Kashi Sanskrit Series No. 41 Benares 1940.
NR = Nānārtharatnamālā, Deccan College Poona 1954.
NSA = Nānārthasamgraha of Ajaya, Madras 1937
NSK = Nānārthārṇavasamkṣepa of Keśava, Trivandrum Sanskrit series No. 23, 29 and 31 Trivandrum.
MW = Monier Williams Dictionary.
ŚASVATA, Oriental Book-agency edn., Poona 1918.
ŚK = Śabdakalpadruma of Rādhākānta, Calcutta.
ŚRS = Śabdaratnasamanvaya G.O.S, Baroda 1932.
ŚR = Śabdaratnākara (with Marathi meanings),
VL = Viśvalocana (with Bhāṣā ṭīkā) Bombay 1912
Bhide's Sanskrit English Dic. Chitrashala edn. 1926

We note below a few readings as found in A2 MS. (collated for the critical edition of N R) showing close affinity to N M

| Lines | N. R. | Lines | N.M = A2 | Lines | N R. | Lines | N. M. = A2 |
|---|---|---|---|---|---|---|---|
| 35 | प्राज्ञणो° | 21 | प्राङ्कणो° | 198 | अक तु | 72 | अकोऽद्रौ |
| 43 | °गतौ | 29 | °गते | 201 | त्रिषु | 78 | चन्द्रे |
| 59 | कुपापेऽल्पे | 44 | च पापेऽल्पे | 204 | दशाननामात्ये | 80 | दुःशासनापत्ये |
| 69 | चोरे | 346 | चापे | 210 | न स्त्रिया | 74 | निर्गम(°मे) |
| 70 | शोणिते तु | 347 | °शोणितयोः | 213 | त्रिषु | 88 | प्रास |
| 71 | स्याङ्गिप्साच्छादनाब्देषु | 370 | छद्यत्याच्छादनेऽब्जे च | 229 | साम्न' | 236 | साम्नि |
| | | | (or तु) | 246 | स्वर्ग. | 297 | स्वर्गे |
| 73 | जवे | 382 | जये | 247 | वृषभ.स्त्र्यौषधे च ना | 278 | विषमोऽज्ये व(or प)- |
| 86 | क्षये | 499 | जये | | | | टेऽपि च |
| 87 | शङ्खध्वसौ | 500 | शङ्खध्वने | 266 | व्यङ्गो ना भेके | 271 | गोनाभे भेके |
| 94 | रजनी | 536 | ध्वजिनी | 332 | मूषके | 459 | मूषिके |
| 103 | गृहीते | 831 | ग्रहान्ते | 347 | पट्टि | 458 | पट्टी |
| 111 | पवने | 1086 | पचने | 350 | *1 | 453 | वाट is found |
| 129 | पिङ्ग | 1173 | Sपि स्यात् | 567 | *. 1 | 676-7 | व्यक्ति with mean- |
| 130 | धातरि | 1256 | दातरि | | | | ings |
| 131 | निर्वृतौ | 1257 | निर्मितौ | 620 | *. 1 | 898 | [प्रधि°] |
| 139 | धने | 1374 | ध्वनौ | 69? | तु त्रिलिङ्गकः | 1119 | क्षयकामयोः |
| 163 | क्लीबे स्य° | 1857 | पक्षिस्य° | 842 | कुपिते | 1294 | कुटिले |
| 164 | सन् | 1869 | सत् | 1061 | विलासे | 1763 | विनाशे |
| 168 | गर्वे | 1933 | गर्भे | 1179 | °वाणी च | 194 | °वाणेऽद्रौ |
| 130 | शुभ्रे | 46 | शुक्रे | 1307 | विहङ्गौ खगसायकौ | 323 | सारथौ चोष्णदीधितौ |
| 181 | तर्कः | 47 | मर्कः | 1790 | वणिक्पथे | 1236 | वणिग्धने |

*List of lines from the N M shown as additional lines in A2 (in N R)*

| Mañj. | Rat. | Mañj. | Rat. | Mañj. | Rat. | Mañj | Rat. | Mañj. | Rat. |
|---|---|---|---|---|---|---|---|---|---|
| 10 | 46 | 290 | 243 | 652 | 472‖ | 1155 6 | 1785.1·2 | 1352 | 2355·1 |
| 53 | 182·3 | 308 | 1316 | 664 | 466 | 1174 | 722 | 1392 | 966‖ |
| 54 | „ 4 | 311 | 1325 | 723 | 1599.5 | 1178 | 749 | 1446 | 936‖ |
| 67 | 195 | 319 | 1309 1 | 748 | „ .2 | 1185 | 747.3 | 1506 | 1876 |
| 90 | 199 | 320 | „ .2 | 750 | „ .11 | 1191 | 758 | 1512 | 1973.3 |
| 134 | 1302.1 | 322 | 1318 1 | 751 | „ .9 | 1200 | 763 | 1524 | 1960.2 |
| 139A | „ 8A | 326 | „ 3 | 752 | 1599 10 | 1206 | 740‖ | 1525 | 1923‖ |
| 150 | „ 10 | 336 | „ 75 | 753 | „ .3 | 1216A | 771A | 1527-8 | 1953.1·2 |
| 151 | „ 13 | 343 | 1336 | 799 | 2253.2 | 1231 | 181 | 1531·2 | 1973.8-7‖ |
| 153 | „ 11 | 357 | 281 | 829 | 101 | 1238 | 1806 | 1535-6 | 1912.1·2 |
| 158 | „ 16 | 387 | 76 | 925 | 1653 | 1242 | 1808 | 1555 | 1973.4 |
| 159 | „ 12 | 413 | 1354A | 930 | 2270 | 1244 | 1800 | 1655 | 1024‖ |
| 160 | „ 17 | 414 | 1 357 | 931 | 2277 | 1269 | 838‖ | 1657 8 | 1030.1-2 |
| 161 | „ 18 | 452 | 367 | 932 | 2272 | 1289 | 788 | 1675 | 2014‖ |
| 162 | „ 7 | 462 | 360 2 | 1023 | 1739 | 1290A | 807·1A | 1718 | 2398 |
| 167 | 1270 | 492 | 380 | 1029 | 1667 | 1336-3 | 1873·2-4 | 1775-6 | 2063 |
| 182-3 | 1302 | 515 | 387 | 1063 | 2321 5 | 1339 | 1873.5 | 1777 | 2037 |
| 187 | 1210.1-2 | 610 | 1486.2 | 1064 | „ 3 | 1341 | „ .7‖ | 1802 | 1100 |
| 237-9 | 1306 | 615-6 | 2208.2-3 | 1065 | „ 6 | 1342 | „ 8 | 1911 | 2107‖ |
| 240 | 1304 | 617A | „ .4A | 1066 | „ 7 | 1343 | „ .6 | 1993 | 1168 |
| 267 | 250.2 | 646 | 564 | 1098 | 682 | 1345 | „ .1‖ | 2004B | 1164.2B |
| 286 | 237 | 649 | 530 | 1109 | 2326 | 1360 | 2355.2 | | |

A = prior half. B = Posterior half.
‖ indicates the lines slightly different in Ratnamālā from Mañjarī.

श्रीराघवविरचिता

# नानार्थमञ्जरी

समस्तविद्यावेत्तारं सुमुखं श्रीविनायकम् ।
अज्ञानतिमिरादित्यं विघ्नघ्नं नौमि संततम् ।
विश्वादीनि समाहृत्य बालानां ज्ञानसिद्धये ।
कविना राघवेणाद्य कृता नानार्थमञ्जरी ।
विश्वप्रकाशो गोपालः शेषकारो धनंजयः ।
शब्दार्णवो वैजयन्ती सूर्यो रुद्रश्च यादवः ।
प्रतापो भागुरिर्दण्डी रभसश्च हलायुधः ।
सुभूतिर्हरिविष्णू च वररुच्यमरोत्पलाः ।
अजयः शाश्वतश्चैते उच्यन्ते पण्डितैः पुरा ।
ॐ प्रश्नेऽङ्गीकृते रोषे प्रौढे ब्रह्मणि चाव्ययम् ।
अः स्याद् ब्रह्मणि विष्ण्वीशकूर्माङ्कणरणेषु च ।
गौरवेऽन्तःपुरे हेतौ भूषणेऽङ्घ्रावुमेज्ययोः ।
आ प्रगृह्ये स्मृतौ वाक्ये परितापे पितामहे ।
घटे भावे च आस्तु स्यादव्ययं कोपपीडयोः ।
आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।
इर्वितर्के स्मरे हारे फणरत्नद्युतौ पुमान् ।

---

C reads at the beginning on a suppl. fol. :

श्रीमत्प्रस्तरसद्मसौधकलशाकूपारगर्भोद्भवो
भूक्षिन्मान्यबलाधिराण्निजसभापूर्वाद्रिमस्तास्थितः ।
कुर्वन्कूटकलोकराण्मृधनिशारम्भे स्वय भूषितां
कारुण्याकरचन्द्रमाः सुमनस· प्रह्लादयन्नेधते ॥
श्रीमन्न्यायविधायिसद्गुणवृतः प्राक्कूटकारीश्वर
स्वर्भानुप्रथनात्तमञ्जुलयश.श्लाध्यप्रसादोत्कर ।
सत्ताभावुकवाग्मिचित्तकुसुदान्यामोदयन्भ्राजते
कारुण्याकरपूर्णिमेन्दुरपरः क्षोणीतलाभ्राङ्कणे ॥

Before line 1, B reads हरिः नानार्थमञ्ज-रिका on marg.

3. A समास्तृत्य for °हृत्य

7. BCE भागुरी for °रिर्. AD रासभश्च for रभसश्च

9 AD अजय्यः for अजयः

12. A °न्त्ययोः for °ज्ययोः

13. AD प्रगृह्य-, C प्रगृह्यौ, E प्रहृत्यौ for प्रगृह्ये

15. E °व्यक्तौ for °व्याप्तौ. A सीमान्ते for सीमार्थे

अग्रे करेणुकक्ष्यान्ते गुहायां शशितेजसि ।
ईर्वारिजदले लक्ष्म्यां वाण्यां कमलकेसरे ।
उः शंभौ क्षत्रिये नेत्रे हरमौलौ हरावपि ।
ऊः स्याच्छुचीन्द्वोः पुरुषे राजपुत्रे गले सुरे ।
प्राङ्क[ङ्ग]णोपमयोः पूर्णकुम्भे वणिजि रक्षणे ।
ऋः कुञ्जरे शिखरिणि विभेदे देवमातरि ।
भावे देवरिपौ नद्यां सुरायां विवरे दिवि ।
ॠ दृष्ट्यां चिकुरे वाताशने विगतसंपदि ।
हिमपद्मदितिस्वर्गधनभूषाभुजाम्बुषु ।
ऌः कुलीरे कपर्दन्ते हस्तिनामपि दंष्ट्रके ।
स्वर्गादित्योर्लिप्तगात्रे गतनम्रि रक्षसि ।
ॡ तु स्यात्कृकलासेन्द्रावङ्केऽक्षिण मकरे सुरे ।
लीलागते लोचनास्थ्नि नागमातरि मातरि ।
एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ ।
व्योम्न्येकादशसंख्यायां दिनादौ मणिकुट्टिमे ।
ऐ हस्ते दिङ्मुखे वाते हरेऽद्रिशिखरे त्वचि ।
ओ वारिजे जले कुड्ये श्रीदमेघेन्दुयोनिषु ।
शक्रे जीवे विरिञ्चे स्यादौः स्कन्दे गणनायके ।
विशुद्धाङ्गेन्दुकलयोरनन्ते सिद्धपुष्पके ।
अंशब्दो वक्रवाक्येऽतिदीर्घेऽञ्जलिनियोगयोः ।
सप्तस्वरादिमाने च परज्योतिषि च स्मृतम् ।
अः शिखायां सिद्धमन्त्रे प्रगाहेऽर्के रथार्वणि ।

---

18. Mss. read कक्ष्यां, but A (after corr.) लक्ष्म्यां (as in text); cf. notes

20. C शुचीज्यो: (°न्दौ above line). E गजेश्वरे for गले सुरे

25. AD –स्पर्श– for –स्वर्ग–. AD (both before corr.) E –माषा– for –भूषा–. BCE [अं]बुजाम्बुषु

26. A कपौ दंत–

28. A (before corr.) D अर्के; A (by corr. *sec. m.*) अंगे for अङ्के

29. Sl. no. AD 15

32. AD क्वचित् for त्वचि

33 E –मेघेज– for –मेघेन्दु–

35. A °पुष्करे; C °पुष्पके for °पुष्पके

36. BE शंभौ; D शवे for –शब्दो

37. E –मन्त्रे for –माने

38. B ऽर्के– for ऽर्के

चक्रे कुक्कटमूर्धीन्दुबिम्बे ब्रह्मेशाविष्णुषु ।

इति राघवीयनानार्थमञ्जर्यां अज्वर्गः परिसमाप्तः ।

को ब्रह्मण्यर्कवाय्वग्निशमनस्वर्गकेकिषु ।
विष्णावाहतशब्देऽब्धौ धियां शुक्ले वसौ द्युतौ ।
कं शिरोम्बुसुखेषु स्यात्तत्रैव च कमव्ययम् ।
किं प्रश्नाक्षेपकुत्सासु वितर्के क्लीबमव्ययम् ।
कुः स्त्री भूम्यां च पापेऽल्पे कुत्सायां वारणेऽव्ययम् ।

इत्येकाक्षरकान्ताः ।

अर्कोऽर्कपर्णे स्फटिके ताम्रे सूर्ये दिवस्पतौ ।
ज्येष्ठभ्रातरि शुक्लेऽर्कपादपे च पुमान्भवेत् ।
मर्कस्तु काङ्क्षोहाकर्मभेदे पुष्करवायुषु ।
कर्की कर्कटके राशौ स्त्रियां कर्कस्तु मल्लके ।
घटभेदाग्निमुकुरसिताश्वकृपणेष्वपि ।
कङ्कस्तरङ्गे गुप्ते च गृध्रे काके युधिष्ठिरे ।
कूले मधुरिपौ कोके पिके वैवस्वतेऽप्यथ ।
मुनिवल्मीकयोः शैले नाकुः स्यात्पुंसि कथ्यते ।
त्रिलिङ्गे काकुशब्दस्तु ध्वनिवैरूप्यसंभवे ।
गायकानां कण्ठदोषे कच्चिदर्थेऽव्ययं पुनः ।
अङ्कः स्थानान्तिकक्रोडभूषणोत्सङ्गलक्ष्मसु ।
मन्तौ नाटकविच्छेदे चित्रयुद्धे च रूपके ।
टङ्कोऽस्त्री टङ्कणे गुल्फे काणान्तरखनित्रयोः ।

---

39. AD -बिम्ब-. Sl no. ABCD 20. Col. ACD °ज्वर्गः °माप्ता
40. A को ब्रह्मणि समीरार्क-; B को वा ब्रह्मार्कवाय्वग्नि-; CE को ब्रह्मात्मार्कवाय्वग्नि- for prior half
42. ACD किम् for कम्
45 AD सूदे for सूर्ये
46. D शुक्लेर्के. AD अथ for भवेत्
47. Cf. notes for this line. AB मार्कस्तु for मर्कस्तु. C -भेद-.
48. ll. 48 and 49 are transposed in all Mss., cf. notes AD कर्किः. AD अर्कस्तु or कर्कस्तु
50. E गुप्तौ for गुप्ते
51. E तूले for कूले
53 B स्यात् for तु . BC -वैरूप- for -वैरूप्य-
54 BCE कश्चिदर्थे
55 AD °णोत्साह- for °णोत्सङ्ग-
56. AD मतौ for मन्तौ. Mss. नागक° for नाटक°
57. B गुद्धे for गुल्फे

कोशेऽश्मदारणेऽपि स्याज्जङ्घायां मासि कथ्यते ।
न्यङ्कुर्गुरुकुलस्थाग्निशिष्ये नेममुनौ मृगे ।
शङ्कुः पर्णसिराजाले यादोभेदसुसंख्ययोः ।
स्थाणौ शक्तित्र्ये कीले मेहने च पुमानयम् ।
शङ्कातिरेकयो रेकः पाको जरसुनिष्ठयोः(?) ।
अर्भके पचनेऽपि स्याल्लोकस्तु भुवने जने ।
श्लोको यशसि पद्ये च शोकः शृङ्गानुक्रोशयोः ।
दुःखे पादरसेऽपि स्यान्नाकः स्वर्गान्तरिक्षयोः ।
चक्रवाके वृके कोकः शक्रो गोमयदेशयोः ।
किकी चाषे द्रव्यभेदे स्त्रियां केका शिखिस्वने ।
मुष्कोऽण्डकोशे मोक्षे द्रौ रोको रश्मौ बिलेऽपि च ।
शङ्का वितर्कभययोरस्पर्शनविनाशयोः ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ।
ढक्का कुल्याशीघ्रवाद्यामृगाङ्काङ्केषु गौरवे ।
अकोऽद्रौ दुरिते क्लेशे ओकोऽस्त्री मन्दिरेऽऽश्रमे(ये) ।
शल्कोऽस्त्री शमले पापे डम्भे च शकलेऽपि च ।
निष्को निर्गमदीनारस्वर्णोरोभूषणेषु च ।
साष्टे शते सुवर्णानां गाङ्गेयेऽपि पुमान्पले ।
वल्कं तु वल्कलेऽपि स्याच्छौकं गतिशुकौघयोः ।
भेकस्तु कातरे भेको मण्डूकेऽपि च कथ्यते ।
चन्द्रे भूम्यां त्रिकः पुंसि त्रये पृष्ठाधरे त्रिकम् ।

---

58. Sl. no. ABCD 30
59. AD नेमिमुखे, C नेमसुने
60. Mss. पर्णे– for पर्ण–. D om the post. half of 1.60 and prior half of 61
61. A °कृपा for °त्र्ये. Mss. मोह्ने for मे°
64. Mss. शृङ्गाप्रकोशयोः
65. Lines 65–6 are omitted in AD.
66. BCE श्नोको गोमायु– for शक्रो गोमय–, cf. notes
68 Sl. no. C 35
71. Cf. notes
72. Mss. श्लेषे for क्लेशे; cf. *NR* 1. 198. A औवस्त्री; BCE ओकः स्त्री; D औकस्त्री
73. Cf, notes.
77. ACDE भीकस्तु; B मिकस्तु; cf. notes
78. Sl. no. ABCD 40

पुष्पभेदे **बको** रक्षःपक्षियक्षानलेषु च ।
कीरे दुःशासनापत्ये शोणके व्यासनन्दने ।
**शुकः शुकं** तु शैरीषकुसुमग्रन्थिपर्णयोः ।
त्रिष्वल्पे चातके पुंसि **स्तोको राक**स्तु पूषणि ।
**राका** नवरजाकान्त्योः पूर्णचन्द्रतिथावपि ।
**शाकः** पक्तौ वृक्षभेदे भूपद्वीपविशेषयोः ।
**काका** तु स्त्री हरीतक्यां **पङ्को**ऽस्त्री कर्दमैनसोः ।
**किष्कु**र्हस्ते वितस्तौ च प्रकोष्ठे कुत्सितेऽपि च ।
नल्वेऽथ पापे **कल्को**ऽस्त्री गुल्मे विट्किट्ट(?)दम्भयोः ।
**छेको**ऽभिज्ञग्रासगृहासक्तपक्षिमृगेषु च ।
अवाचि वानरे **मूक एके** मुख्यान्यकेवलाः ।
**शुल्कं** घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च ।

इति त्र्यक्षरकान्ताः ।

**आलोको** दर्शने द्योते प्रबोधे वन्दिभाषणे ।
**करकः** पक्षिभेदे स्यात्कमण्डलुकरङ्कयोः ।
डाडिमाक्रोशहस्तेषु पुं स्त्रियां तद्घनोपले ।
**करङ्को** मस्तकास्थि स्यान्नाळिकेरफलास्थनि ।
क्षेत्त्यसातकयोः (?) खड्गे कङ्कपत्रे च **सायकः** ।
**जम्बुकः** क्रोष्टृवरुणनीचेष्वप्यथ **पेचकः** ।
उलूके करिणः पुच्छमूलोपान्ते च कथ्यते ।
**पृथुक**श्चिपिटे बाले **चानकः** स्वनदम्बुदे ।
भेर्यां मृदङ्गे पटहेऽप्यथ लोहापवादयोः ।
**कलङ्को**ऽङ्के कीटके स्यात्तक्षकस्तु भुजंगमे ।

---

80. Mss. कोणके for शोणके.
81. ABCD शकुंतौ; E शु*न्तु for शुकंतु Mss. शैलूषे for शैरीष, cf. notes
84. AE पंक्तौ for पक्तौ
87. B गुल्मेपि किटदंभयोः for post. half
88. Mss. ऽभिज्ञा– for ऽभिज्ञ.–
90. Sl no. CD 45.
91. C °नोद्योते for °ने द्योते
94 ACDE °फलास्थिनि for °स्थनि
95. B क्षेत्यासाताकयोः; E क्षेत्यपात°
96 D om l. 96
100. Sl. no. ABC 50

वर्धकावथ **पिण्याक**स्तिलकल्के च कुङ्कुमे ।
हिङ्गौ च सिल्हकेऽपि स्याद्**बाह्लीको** विषयाश्वयोः ।
देशभेदे च तत्क्लीब हिङ्गौ कुङ्कुमवीरयोः ।
गाण्डीवेऽपि **पुलाक**स्तु संक्षेपे भक्तसिक्थके ।
तुच्छधान्ये **वृश्चिक**स्तु राश्योषधिविशेषयोः ।
शूककीटेऽपि **प्रतीकः** प्रतिकूले स्त्रियामयम् ।
एकदेशे तु पुंस्येव **भूतिकं** तु नपुंसके ।
स्याद्भूनिम्बे भूस्तृणे च खर्जूरतृणदीप्ययोः ।
[ज्योत्स्निकायां च घोषे च कोशातक्यध्वनि स्मृतम् ।]
**कौशिको** मुनिभेदे च नकुले शक्रघूकयोः ।
उद्घातरि कुशाजीवे कोशवत्यहितुण्डिके ।
गुग्गुलावप्यथ नदीकात्यायिन्योस्तु **कौशिकी** ।
रुक्तापशङ्कास्वातङ्कः **स्तबको**ऽध्यायगुच्छयोः ।
स्वल्पे दरिद्रे नीचे स्यात्**क्षुल्लक**स्तु त्रिलिङ्गके ।
स्याद्वर्तिके नवदले **वर्तको**ऽश्वखुरे विशि ।
**दीपकः** स्यादलंकारे यवान्यां जीरकेऽपि च ।
दीपे च दीपनीयां(?) चाजमोदशिखिचूडयोः ।
पीडार्थेऽपि **व्यलीकं** स्यादपराधेऽप्रियेऽनृते ।
कामजे पीनसे क्रौर्येऽकार्ये वैलक्ष्यतथ्ययोः ।
**अलीकं** त्वाप्रिये स्वर्गे संघेऽनृतललाटयोः ।
**अनूक**मस्त्रियां वंशे शीले च गतजन्मनि ।
**पिनाकः** शिवशूले स्यात्तस्य बाणासनेऽपि च ।
स्त्रियां स्याद्**धेनुका** वाजियोषित्यपि पशौ गवि ।

---

101. Mss. वर्धक्यामथ
102. Mss. सिंह्के for सिल्हके. C बाह्लिको
104. D गांडीले
105. C उञ्छ°; E इच्छा° for तुच्छ°. C राश्यौ°
108. BCE भूतृणे. BC –दिव्ययोः for–दीप्ययोः
110. AD शक्रपूगयोः; B वज्रयुलूकयोः for शक्रघूकयोः. Sl. no. ACD 55
111. E °कुण्डिके for °तुण्डिके
115. B वर्तिक for वर्तिके
116. For ll. 116-7, see notes
119. Sl no. A 60
120. E transp. ll. 120 and 121. A om. l. 120 CE प्रिये for अप्रिये. Sl. no. BCD 60

भवान्यां च कृपाण्यां च प्रसूताकरियोषितोः ।
क्षुरिकायां **कालिका** तु दिवाकीर्त्यां च शिल्पके ।
मेघजाले यातनायां वृत्तौ नटनयोषिति ।
दोषे स्वर्णादिधातूनां कृष्णावृद्धिसुरासु च ।
क्रमदेये वस्तुमूल्ये योगिन्याम्बिकयोरपि ।
पटोलशाखारोमालिमांसीज्याकालिमाचिषु(?)।
धूसर्यां नवमेघे च ततः कर्णविभूषणे ।
**कर्णिका** करिहस्ताग्रे करमध्याङ्गुलावपि ।
सूक्ष्मवस्तुन्यग्निमान्द्ये क्रमुकादिच्छटांशुके ।
ताटङ्के वर्तुले पद्मबीजकोश्यां त्रिसूत्तरे ।
**कटको**ऽस्त्री राजधान्यां राशौ सानुनितम्बयोः ।
सूच्यग्रे वलये दन्तावलानां दन्तमण्डले ।
सामुद्रलक्षणे चाथ **जल्पाको** मुकुरे पुमान् ।
**मेचक**स्तिमिरे कृष्णवर्णे स्याद्वाच्यलिङ्गकः ।
**ताटङ्को**ऽस्त्री परीणाहे विटङ्के कर्णवेष्टने ।
**लम्पाको** लम्पटे देशे ज्योतिषग्रन्थसंज्ञिते ।
**किंपाक**स्तु फले मूले **पावकः** पावनेऽनले ।
**विपाकः** कीर्त्यते स्वादौ परिणामे च दुर्गतौ ।
**निपाकः** पचने स्वेदेऽप्यसत्कर्मफलेऽपि च ।
**पालिका**ङ्कुरपात्रे स्या**दुलूको** राजघूकयोः ।
**बालिका** पिञ्छजाले स्यात्कन्यायां कर्णभूषणे ।

---

124. A च कृपाभ्यां, E चक्रवाक्यां for च कृपाण्यां
127. AD -विधि-; BCE -विद्धि- for -वृद्धि-
129. AD -मांसि-; BCD -मासि-. B -काम-, CE -काक- for -कालि-
130. A खसरियं, D सूसर्यं (both corrupt). AD घन- for नव- Sl. no. C 65
131. Cf. *Med.* 6.60ab
132. Mss. क्रमुकेद्रि- (E °न्द्रि-) for °कादि-. AD °जटांशके for °च्छटां°
133. AB ताडङ्के
135. E दन्तमण्डने
136. AD (before corr.) जाता for चाथ
139. E ज्योतिषे for °ष-. BCE -संज्ञके for -संज्ञिते
140 A lacuna for मूले. B पवने for पावने. Sl. no. ABCD 70
142. Mss. सपाकः for निपाक, cf. notes
144. BC वा पिंछजाले (C पिंछाले; E वापि वाछाले) for पिञ्छजाले स्यात्

**मोचकः** कदलीशिग्रुनिर्मोचकविरागिषु ।
**अशोको** वञ्जुले माने द्रुमनिःशोकयोर्मतः ।
वर्तते कटुरोहिण्यामथ क्रूरे च कामुके ।
भयहीने कलौ पुं स्यादभीकः प्रोच्यते ततः ।
**आह्निकं** नित्यवृत्तौ स्याद्भोजने नित्यकर्मणि ।
**हुडुको** वाद्यभेदे स्याद्दात्यूहे मदवर्तिने ।
**सृदाकुरनिले** वज्रे दवाग्नौ प्रतिसूर्यके ।
**तूलिका** कथिता लेख्यकूर्चिकातूलशय्ययोः ।
**अनीकस्तु** रणे सैन्ये संदेहेऽपि च कथ्यते ।
नवके दुर्जनेऽपि स्याद्**अंशुकं** नेत्रवस्त्रयोः ।
**वार्धकं** वृद्धसंघाते वृद्धत्वे भाववृन्दयोः ।
**कौतुकं** त्वभिलाषे स्यादुत्सवे नर्महर्षयोः ।
हस्तसूत्रे च कुतुके **तन्त्रकः** कपटेऽपि च ।
**भूमिका** रचनायां स्यान्मूर्त्यन्तरपरिग्रहे ।
**नायको** नेतरि श्रेष्ठे हारमध्यमणावपि ।
**पताको**ऽस्त्री वैजयन्त्यां तत्पटश्रेष्ठयोरपि ।
**आशङ्का** नाशसंकोचभयतर्कग्रहेषु च ।
**कोरकं** कुड्मलेऽपि स्यात्तक्कोलकमृणालयोः ।
**शङ्खकं** वलये कम्बुनिधिसंख्यानखेषु च ।
मणौ शीर्षे शिथुवने **नरकं** मद्यभाजने ।

---

145. B -निर्म्रे° for -निर्मो°
146. ABD वंचुले
148. CE कले for कलौ
149. A निनि- for नित्य-
150. AD हंसके; B हसुको; CE हडुको for हुडुको; cf. notes. A स्यादात्सूहे (sic). Sl. no. ACD 75
151. ABCD सपा*रनिले; E स्रष्टाकूरानिले; cf. notes
152. Mss. कुलिका (B कूलि*; C कुलि*; E कुलिकं) कविता (C कवि*-; E lacuna)-लेख्यो: कूर्चिका(B कूच्चिका)कूल (CE कुल)शय्ययोः; cf. notes
153. Cf. notes
154. B अवकं, C अ*क; cf. notes
159. Sl, no. A 80
160. Om. in A. BC पातकोस्त्री; E पताकास्त्री. Sl no. BCD 80
161. AD -तद्ग्रहणेषु for-तर्कग्रहेषु
162. A तत्कीले कर्मृनाल्योः; BCDE तकोलक- (B तत्केलेक-; C तत्कोलक-; D तकोलक) मृणालयो for the post. half
164. C शिधुवने; D (by corr.) निधुवने (before corr. as in text). ACD मध्य° for मद्य°

निरये चाथ पुंसि स्याद्रासिको दक्षिणेऽपि च ।
वर्णकोऽस्त्री प्रकारे स्याच्चन्दनेऽङ्गविलेपने ।
चन्द्रको मेचके चन्द्रे भूषणे बर्हबिन्दुके ।
नालीकं कमले शल्ये बाणेऽपि स्यादथोच्यते ।
वंशनाले च द्रोणीको निर्मोकः परिमोचने ।
तमालपत्रे श्रेष्ठे च पादपे तिलकः पुमान् ।
स्याद्दाम्भिकः कौक्कुटिके वञ्चकेऽप्यथ गैरिकम् ।
स्वर्णेष्टकादावलकः पुरोलम्बनकुन्तले ।
कलिका कोरके हर्षे लासकः पञ्जरेऽस्त्रियाम् ।
नटयोषित्कुथो(?) धूर्ते जम्बुके भाषितेऽपि च ।
अव्यक्तमधुरे श्रेष्ठे वञ्चकः परिकीर्तितः ।
घुटिका तु महारत्ने पिण्डे बद्धरसे मणौ ।
लुब्धकः पुंसि शबरे चान्द्रायामभिलाषिणि ।
पर्यङ्कश्चापि पर्यङ्के मञ्चे परिकरेऽपि च ।
कलङ्कः कृष्णवर्णे स्यात्तमाले तिलकेऽपि च ।
अंशुकं सूक्ष्मवस्त्रे स्यात्परिधानोत्तरीययोः ।
किरणानां समूहे च मुखवस्त्रे तदिष्यते ।
जालकं पद्मके व्यूहे आनाये भूषणेऽनृते ।
बिन्दौ वागुरिके पुंसि गवाक्षे क्षारकेऽपि च ।
कनीनिकायां नक्षत्रे मोक्षे स्यात्तारका स्त्रियाम् ।
पिटकस्त्रिषु बृन्देऽपि पेटके चाथ जालिकः ।
किराते धीवरे हर्म्येन्द्रजालादियुतेऽपि च ।
खेटकौ ग्रामफलकौ गुरौ देश्ये च देशिकः ।
किञ्जल्कः पद्मरेणौ स्यात्केसरेऽपि च कथ्यते ।

---

165. E रसिको
166. A पण्यको for वर्णको
167. CE °सिंदुके for °बिन्दुके
168. नाळीकं
170. Sl no. AD 85
171. E डांभिकः for दाम्भिकः. C कौकुटिके
172. B पुरा-; CE पुना- for पुरो-, E -कुदले
174. CE जबके
178 BE पल्यके
180 Sl no. ACD 90
181 AD करणाना for किर°
182 AD बिंदुके for पद्मके AD °णानृते
185. AD पिटकेस्त्रिषु A ब्रिंदे, B बिंदे. B जालकः
186. B किरातो शबरे for °ते धीवरे
188. BC पुष्क(°ष्प ?)रेणौ, E पुंसि रेणौ

अन्धेऽप्यनेडमूकः स्यात्कीचको दैत्यवंशयोः ।
कुलिकः स्यात्कुलश्रेष्ठेऽप्यंशभागौ तु वण्टकः ।
कूर्चिका क्षीरविकृतौ कर्प्यां दार्विकापि च ।
भूतिका चापि भूनिम्बे पुष्पकं कुसुमाञ्जने ।
पुष्पकं तु रथे वृक्षे चातको हरिणे खगे ।
कञ्चुकी वारवाणेऽह्यावुत्सुको द्वेषगर्वयोः ।
स्यान्मृगाङ्कः कालकण्ठे सितकैरवचन्द्रयोः ।
प्रतीकोऽवयवेऽपि स्यात्प्रातिकूलेऽपि चार्थवत् ।
गुलिको मन्दतनये रसबद्धास्त्रदेशयोः ।
दिङ्नागे चाथ गणको ज्योतिषज्ञलिपिज्ञयोः ।
गणिका वृक्षभेदे स्यात्स्त्रियां वारास्त्रियामपि ।
कटुतुम्ब्यां शुभ्रवेणाविक्ष्वाकुर्नृपतौ स्मृतः ।

इति त्र्यक्षरकान्ताः ।

कलहंसे च कारण्डे चातुरीकः पुमानयम् ।
मातङ्गिकः करिशिशौ भवान्यामपि तत्स्त्रियाम् ।
ज्योत्स्निकायां पटोले च घोषे कोशातकी ततः ।
सालावृकः कपिक्रोष्टुश्वानेषु खदिरे सिते ।
श्रीपर्ण्यां सोमवल्कः स्यादथ बुद्धे विनायकः ।
गुरौ च गरुडे विघ्नराजेऽप्युत्कालिकः पुमान् ।
स्यात्कल्लोले कुड्मले च वल्लर्युत्कण्ठयोरपि ।
लालाटिकः प्रभोर्भावदर्शी कार्याक्षमश्च यः ।

---

189. AD °प्यनेक° for °प्यनेड°; cf. notes. AD वेणुवंशयो:; B वशदैत्ययोः C. blank for को दैत्य

190. BC कलिक. स्यात्कलाश्रेष्ठ for prior half. AD °भागे for °भागौ. Sl. no. ACD 95

191. AD कुंचिका; B कृक्षिका for कूर्चिका AD °प्रवृत्तौ for °विकृतौ. AD कपर्यां, B कृर्प्यां

192 B भूतिकापि च, CE °कामपि for °का चापि. CD पुष्पिक. E कुसुमांतरे

197 ABCD गुळिको. D रसबंधाब्जदेययोः for post. half

200. Sl no. AD 100

202. AD पावन्याम् for भवान्याम्

204. AC -क्रोष्टृ- for -क्रोष्टु-

206. AD om. राजे. AD उत्कालिकः for उत्कलिकः, *MW* in f. gend.

208. CE प्रभौ, and कार्यक्षमे

**पुण्डरीको** व्याघ्रभेदे दिग्गजेक्षुद्रुभेदयोः ।
पुंनपुंसि सितच्छत्रे सिताम्भोजेऽपि कीर्तितम् ।
**जैवातृकः** कृशे चन्द्रे भैषज्यायुष्मतोरपि ।
**सौगन्धिकं** तु चाक्षुष्ये(?) कल्हारेऽपि प्रचक्ष्यते ।
नर्मवाक्परिहासे च स्त्रियामेव **मधूलिका** ।

इति चतुरक्षरकान्ताः ।

अथ कामजले(?) **खः** स्यात्**खा** स्त्री नखरतीक्ष्णयोः ।
**खमिन्द्रिये** सुखे स्वर्गे शून्यबिन्दौ विहायसि ।
कृपानक्षत्रसंवेशतन्द्रीशान्तरसेषु च ।
कुणिसंभेदगरुडक्षेत्रखङ्गपुरीष्वपि ।

इत्येकाक्षरखान्ताः ।

**शिखा** स्यादग्रमात्रेऽग्निज्वालायां च स्त्रियां भवेत् ।
लाङ्गलक्यां शिफायां च केकिमौलिशिखण्डयोः ।
शैलपादपयोरग्रे कचबन्धे घृणावपि ।
**शङ्खो** निधौ ललाटास्थि कम्बौ सानौ भुजंगमे ।
नखरे वलयेऽपि स्यात्संख्यायां पुंनपुंस्यथ ।
शिविरे मन्दिरे वह्नौ मयूरे कुक्कुटे द्रुमे ।
पोत्रिमूषिकयो**राखुः** **शाखी** पादपवेदयोः ।
**शाखा** स्कन्धे सूत्रभेदे वृक्षे पक्षान्तरे भुजे ।

---

209. A °जेक्षुद्र°, BCE °जक्षुद्र°, D °जेक्षुद्द° for °जेक्षुद्रु°
210. ABD तन्न for पुन. Sl. no. C 105
211. ACD तुषे, B कृषौ, E कृषे for कृशे; cf. *AS*
212. E कल्हार चक्षुष्येपि for चाक्षुष्ये कल्हारेऽपि B प्रचक्षते, D प्रवक्ष्यते
213. ACD मधूलिक.
214. ACDE अथ कामशलाकः स्यात् for prior half,- A शाखानखरती°, C शाकानख*ती°; D शखानखरती°, E शासने नखती° for post. half
218 A शिखः, CD शिख for शिखा
219. E-कौलि- for -मौलि-
221. AC ललाटेस्थनि, D ललाटेस्थ्नि. Sl, no, ACD 110
223. Cf. notes
224. Mss. read पत्रि- for पोत्रि-
225. D वृषे for वृक्षे

निकटे छन्दसां भेदे पादपाङ्केऽपि च स्त्रियाम् ।
पुङ्खः श्येने शरादौ च सुखं स्वर्गाम्बुशर्मसु ।
रेखा लेखा श्रेणिदेवलिपिलेखनराजिषु ।
सूक्ष्मांशके सुन्दरे च मर्यादायां च पुंसि वा ।
वरुणस्य नगर्यां तु स्त्रियां द्रव्ये सुखे नपुम् ।
सुखहेतौ सुखं क्लीबे लिङ्खस्तु गतिनाट्ययोः ।
प्रेङ्खः पर्यटने वाजिगतौ निःसरणे मुखम् ।
प्रारम्भे द्वारि बाणाग्रे प्रधाने ताम्रवक्त्रयोः ।
उपायेऽपि ततो मित्रे सहायेऽपि सखा त्रिषु ।
नखोऽस्त्री नखरेऽक्लीबे षण्डे कोलदलेऽपि च ।
न्युङ्खो मनोऽज्ञेन्यलिङ्गः साम्नि षट्प्रणवेषु च ।

इति द्व्यक्षरखान्ताः ।

सुमुखस्तार्क्ष्यतनये फणिभेदे च पण्डिते ।
मनोज्ञवदने विघ्नराजेऽपि स्याच्च दुर्मुखः ।
नागराजे च मकरे तुरंगे च प्लवंगमे ।
विशिखस्तोमरे बाणे परिव्राज्यग्निसूर्ययोः ।
स्त्री रथ्या शारिकायां च खनित्रे पुंनपंसके ।
गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने ।
मयूखस्त्विट्करज्वालास्वपि स्कन्देऽपि षण्मुखः ।

इति त्र्यक्षरखान्ताः ।

शिवे सिंहे पञ्चमुखो अलिबाणौ शिलीमुखौ ।
बर्हिर्मुखो द्विजे देवे भल्लाते चित्रकेऽपि च ।
कुहूमुखं तु दर्शादौ कोकिलोत्पातयोरपि ।

---

227. Mss. रेखं (B रेखा) for सुख
228. BCE -राजसु for -राजिषु
229. BCE सूक्ष्मांशेके
231. Sl. no. AC 115
232. B प्रोखः for प्रेङ्ख॰. A मुखः; D मुखे for मुखम्
233. AD प्रथने नम्रवक्त्रयोः for post. half
236. AD °लिंगे
237. C पिंडिते for पण्डिते
240. Sl, no. C 120
243. B द्वि- for ऽपि .

इति चतुरक्षरखान्ताः ।

स्यात्सर्वतोमुखं यज्ञे चान्तरिक्षे च पाथसि ।
क्षेत्रज्ञविधिरुद्रेषु पुंसि तत्परिकीर्तितम् ।

इति पञ्चाक्षरखान्ताः ।

स्वर्गेद्दग्बाणवज्राम्बुदिग्वाग्भूधेनुलोमसु ।
चन्द्रार्कवृषनागेषु पशौ करणवस्त्रयोः ।
कृत्वार्जुनीप(?)अर्वार्थमृगस्त्रीश्रवणेषु च ।
लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौर्गं गमनगीतयोः ।
गा च गाथायां स्त्रीलिङ्गो गो गन्धर्वगणेशयोः ।

इत्येकाक्षरगान्ताः ।

भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ।
क्लीबे स्त्रीयोनौ धर्मेच्छातपःसंपत्सु पुंस्ययम् ।
ज्ञानवैराग्ययोः कान्त्यां मोक्षे चाप्यथ पन्नगे ।
नगा अगाः पर्वतेऽर्के पादपे स्यान्मृगो गजे ।
कुरङ्गपशुऋक्षेषु स्त्री याच्ना तस्य योषितोः (?)।
भोगः सुखे स्त्र्यादिरतौ भुजंगफणकाययोः ।
कौटिल्ये पालने राज्ये भोग्ये च द्रविणेऽपि च ।
निर्वेशे पण्यनारीणामुत्साहाभ्यवहारयोः ।
प्रबन्धे रूपकार्थे चार्धलेशे भोज(भञ्ज?)नेऽपि च ।
चतुर्थांशेऽथ सर्वार्थप्राप्तौ क्षेमार्थसिद्धयोः ।
योगः संनहनोपायध्यानसंगतियुक्तिषु ।
योगसूत्रे द्रव्यलाभे विष्कम्भादौ च भेषजे ।

250. B -विष- for -वृष-
251. CE कृत्वार्जुनबलीवर्दे for prior half
252. B -दृष्टो; C -दृष्ट्या A गर्गं
253. Mss. गादाय for गाथाया, cf. notes. B गन्धर्वेश° for गो गन्धर्व°
255. Mss. क्लि- metrical shortening!
257. AD नगावग्नौ; BC नागावगौ, E नगावगौ for नगा अगाः; cf. notes, Sl. no. ACD 130
258. AD -वृक्षेषु for -ऋक्षेषु. Post. half corrupt
259. B °काकयोः, for °काययो
261. AD निर्वेशपुण्य- for निर्वेशे पण्य-
262 Cf. notes. E चार्थ° for चार्ध°
263. CE -याप्तौ for -प्राप्तौ
265. AD भेषणे for भेषजे

वपुःस्थैर्ये प्रयोगे कार्मणे विस्रब्धघातिनि ।
इङ्गं स्यादद्भुते ज्ञाने जङ्गमेङ्गितयोरपि ।
भङ्गस्तरङ्गे रुग्भेदे भेदे जयविपर्यये ।
रागभेदे च खड्गे च भङ्गा तु शणसंज्ञिके ।
भङ्गी प्रकारे तुङ्गस्तु शैलपुंनागयोस्त्रिषु ।
उन्नतेऽप्यथ गोनाभे भेके हिंसार्थके त्रिषु ।
अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके ।
देशभेदे तु पुंसि स्यादङ्गेत्यामन्त्रणेऽव्ययम् ।
लिङ्गं संगमने चिह्ने माने शेफेभ(श)मूर्तिषु ।
सांख्योक्तप्रकृतौ हेम्नि शिवमूर्तौ प्रचक्षते ।
शृङ्गं विषाणे सानौ च प्रभुत्वे कूर्चशीर्षयोः ।
क्रीडाम्बुयन्त्रे शिखरे स्यादुत्कर्षप्रधानयोः ।
शृङ्गी विषायां वृषभे विषभोज्ये वटेऽपि च ।
गजमीनसुवर्णेषु कुरङ्गेऽपि च कथ्यते ।
रङ्गो रणे खले रागे नृत्तादौ च त्रपुण्यपि ।
जले रथे क्षेत्रभेदेऽप्यथ भृङ्गं तु कुन्तले ।
अळिधूम्याटषिङ्गेषु पुंसि वर्गस्तु संततौ ।
देशभेदे नपुंसि स्यात्सीसभेदकरङ्गयोः ।
भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि ।
रागोऽनुरागे मात्सर्ये लाक्षादौ रक्तिमत्विषोः ।
[सारङ्गादौ च माधुर्ये प्रणयेऽनुत्तरेच्छयोः ।]
गान्धारादौ रञ्जने च वल्गुश्छागमनोज्ञयोः ।
भाषितेऽपि च भोगी स्याद्राजपन्नगयोरपि ।

---

267. Sl. no. ACD 135
268. Mss. ऋग्वेदे; cf. notes
269. B रंग-; D नाग- for राग-. ABD पण-, CE चण- for शण-. B °सज्ञके
270. AD °पुगवयोस् for °पुंनागयोस्
271. Cf. notes. A °थंकेषु च for °र्थके त्रिषु
272. B °प्रधानकं
274. Cf. notes
275. AD om. l. 275.
278. ADE वृषायां for वि°. E पदे for वटे.
279. AD गजे मीनि सुपर्णेषु for prior half
280. Sl. no AC 140
282. B पगस्तु, CE वगस्तु for वर्गस्तु
283. Cf notes
284. = *VL* 49. 16cd. ACD प्रभावे; CE प्रतापे for प्रपाते; cf. notes
286. Cf. notes
287. Mss. read स्थान for छाग

**मार्गो** मृगमदे मासप्रभेदेऽन्वेषणेऽध्वनि ।
बौद्धोक्तज्ञानभेदे च गुदसौम्यर्क्षयोरपि ।
**नागः** सर्पे गजे वृक्षे मृगे मुस्तकमेघयोः ।
नागकेसरपुंनागक्रूराचारानिलेषु च ।
श्रेष्ठे च नागदन्तेऽक्षसीसे रङ्गे रतान्तरे ।
**खगः** शरार्कविहगामरमेघेन्दुवायुषु ।
राजहंसे ग्रहेऽपि स्यान्मृगभूदेशयोर्लगुः ।
**वेगः** प्रवाहजवयोर्महाकालफलेऽपि च ।
जले स्वर्गे प्रियेऽपि स्याद्विण्मूत्रादिविनिर्गमे ।
**पूगः** स्यात्क्रमुके वृन्दे नृपाधिकृतरेखयोः ।
**सर्गः** स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।
उत्साहत्यागयोश्चाथ **त्यागो** वर्जनदानयोः ।
यानाद्यङ्गे **युगः** पुंसि **युगं** युग्मे कृतादिषु ।
अपि हस्तचतुष्के स्यादौषधे वर्षपञ्चके ।
**खड्गो** मृगान्तरे हेत्यां गण्डकेऽथ शिवे रुचाम्( चि ? )।
लोके वागग्निलिपिषु शिल्पौ **भर्गः** प्रव( च )क्ष्यते ।
**दुर्गा** गौर्यां कालिकायां **दुर्गं** तु नरके पुरे ।
शैलादिदुर्गमस्थाने त्रिषु त्वेष दुरासदे ।

इति द्व्यक्षरगान्ताः ।

**परागः** कौसुमे रेणौ स्नानीयादौ रजस्यपि ।
गिरिप्रभेदे विख्यात उपरागे च चन्दने ।
**मतङ्गस्तु** गजेऽपि स्याच्चण्डालमुनिभेदयोः ।
**अपाङ्गो** नेत्रयोरन्ते तिलकाङ्गविहीनयोः ।

289. B मार्गे for मार्गो. AE मासे प्रभे*; C मासे***, D मासे प्रभेदा for मासप्रभेदे
290. AD बौद्धोक्तौ
291. E मस्तक- for मु°
293. D ऽक्षिसीसे; E द्विसीसे for ऽक्षसीसे
294. B °वारिषु for °वायुषु
295. Cf. notes
298. B कुसुमे for क्रमुके
304. CE लागग्नि -
306 Mss. द्वेषे for त्वेष. Sl no. after the col. A 152, C 153
307. D कुसुमे for कौसुमे
309. B मातङ्गस्तु
310. Sl. No. AC 155

**सारङ्गः** पुंसि हरिणे चातके गजभृङ्गयोः ।
रागभेदे भृगौ नृत्ते शबले तु त्रिषूच्यते ।
**वराङ्गं** स्याद्गजे मूर्ध्नि स्त्रीयोनौ च गुद(ड?)त्वचि ।
**पतङ्गः** शालिभेदेऽग्नौ मार्जाले पारदे शरे ।
विहंगे शलभे सूर्ये **त्रिवर्गस्तु** दिनत्रये ।
वृद्धौ च धर्मकामार्थे त्रिफलायां त्रिपूरुषे ।
स्थानक्षये सत्त्वरजस्तामसेषु पुमानयम् ।
**उत्सर्गो** वर्जने त्यागे सामान्यन्यायदानयोः ।
**रक्ताङ्गो** विद्रुमे भौमे विधौ कम्पिल्लधीरयोः ।
जीवन्तीशूकधान्येषु रोचन्यां तन्नपुंसकम् ।
**उद्वेगः** स्तिमिते क्लेशे भयेऽमन्थरगामिनि ।
सुन्दरेऽधिकभाग्यांशे दुर्दिनेतरवासरे ।
**प्लवंगो** वानरे भेके सारथौ चोष्णदीधितौ( तेः ) ।
संवत्सरेऽपि **सुभगस्तुरीयांशेऽपि** श्रीमतौ ।
**आशुगः** पवने बाणे जङ्घालेऽपि पुमान्भवेत् ।
**उत्सङ्गो** मुक्तसंयोगे सक्थिन्यूर्ध्वकलाङ्कयोः ।
**भुजंगो**ऽहौ विटे वृक्षे **तरङ्गो** वीचिकम्पयोः ।
**अनङ्गो** मन्मथे वायौ पिशाचच्छाययोरपि ।

इति त्र्यक्षरगान्ताः ।

**अभिषङ्गस्तु** शपथे शापे सङ्गे पराभवे ।
आक्रोशेऽथ गजश्रेष्ठे **महामृग** इतीरितः ।

इति चतुरक्षरगान्ताः ।

**मेघे निदाघे किङ्किण्यां घण्टायां घट्टने च घः ।**
**घं वाद्यामृतयोर्घा भूवार्ताघोरेषु च त्रिषु ।**

312. D भृतौ for भृगौ. BD शबळे
314. ABCD वरदे for पारदे
318. AD सामान्येन्वाय°, B °न्यान्वय° for सामान्यन्याय°. Mss °वादयो for °दानयो.
319. ABD कपिल° for कम्पिल्ल°
320. E रेचन्या for रो°. Sl no.ABC 160
321. B हये for भये
325. C स्वशने; E श्वसने for पवने
326 E °कलागयोः
330. AC च for ऽथ. Sl. no. AC 165
332. B घा for घ E घ वाद्यमृतयोर्माभू for prior half

इत्येकाक्षरघान्ताः ।

**ओघः** प्रवाहनिवहोपदेशातिशयेषु च ।
**वेण्यां** परंपरानृत्तद्रुतेष्वपि पुमानथ ।
त्रिष्विष्टेऽल्पे मनोज्ञे च निःसारेऽगुरुशीघ्रयोः ।
कृष्णागरुणि स्पृक्कायामोजःक्षपणयोर्लघुः ।
**मोघा** स्त्रियां पाटलायां त्रिषु निष्फलदीनयोः ।
नीरदेऽथ **मघो** यज्ञे पुं नक्षत्रे स्त्रियामपि ।
इच्छाप्रशंसयोः **श्लाघा** मे **मघा** भेषजे **मघी** ।
**अर्घः** पूजाविधौ मूल्येंऽहोदुःखव्यसनेष्वघ**म्** ।

इति द्व्यक्षरघान्ताः ।

**परिघः** काचकलशे घट्टे प्राकारगोपुरे ।
परिघाते योगभेदे मुद्गरार्गलयोरपि ।
प्रतिबन्धे **निदाघस्तु** ग्रीष्मोष्णस्वेदवारिषु ।
[ **सरघा** स्यात्कण्टकारिमधुक्षुद्रनटीषु च । ]

इति त्र्यक्षरघान्ताः ।

ङं क्लीबमञ्जने ना तु भैरवे विषये जने ।

इति ङान्ताः । इति राघवीये कवर्गान्तवर्गाः परिसमाप्ताः ।

ङान्तद्व्यक्षराद्यप्रसिद्धम् ।

**चस्तुलुष्केश्वरे चापे चकारे चन्द्रमस्यपि ।**

---

336. AC सृक्कायाम् for स्पृक्कायाम् B कृष्णागारुणस्पृक्काया (corrupt) for prior half

337. Mss wrongly मेघो for मोघा, cf. notes

339. Mss read –प्रसगयो for –प्रशसयोः Mss. हे मघा (E °हा) हेषजे मघे for post. half

340 Cf. *NR* 1 273. Sl. no ABC 170

343 E ग्रीष्मोष्म–

344. AD सरघ· for °घा. AE °नदीषु for °नटीषु

345 Col After राघवीये, BE read नानार्थमञ्जर्यां

346. E चापि for चापे

चा स्त्री शोभाशोणितयोश्चं क्लीबे विमले त्रिषु ।
चान्वाचये समाहारेतरेतरसमुच्चये ।

इत्येकाक्षरचान्ताः ।

शुचिः पावकचन्द्रार्कशुक्रशृङ्गारमन्त्रिषु ।
षण्डशुद्धहरश्वेतग्रीष्मानुपहतेषु च ।
स्थिताद्युपधमासेषु (?) त्रिष्वार्चिः शोचिषि स्मृतम् ।
ज्वालामरीचयोः काचाः शिक्यमृद्भेददृग्रुजः ।
रुचिः स्पृहायां कान्तौ स्यादभिषङ्गमयूखयोः ।
अर्चा पूजाप्रतिमयोश्चर्चा स्थासकचिन्तयोः ।
पुं स्याज्ज्वालाभासविट्सु शोचिः शुद्धशुगंशुषु ।
सूचिः सुरतभेदेऽभिनये सीवनधावने (?) ।
केतकीमुकुलाग्रे च भेदके दुर्जनेऽपि च ।
क्रौञ्चो द्वीपे खगे शैले काञ्ची मेखलपट्टयोः ।
पिचुः सुरान्तरे तूले कर्षे च वृषभाश्वयोः ।
प्रपन्नगुदकुष्ठेषु भैरवेऽप्यथ कुन्तले ।
वीचिः स्वल्पेऽवकाशे च तरङ्गे नरके सुखे ।
वीथ्यां कचः शुष्कव्रणे बन्धे केशे व्रणेऽपि च ।
कुष्ठे गुरोः सुते दन्तावलयोषिति तु स्त्रियाम् ।
नीचः प्लवेऽधमे खर्वे मोचा शाल्मलिरम्भयोः ।
मोचः शोभाञ्जने मोक्षे कूर्चं कैतवर्पातयोः ।
भ्रुवोर्मध्ये कुथे श्मश्रौ कुशग्रन्थिविशेषणे ।
चञ्चुस्त्रोटौ च वेदान्ते मञ्चः क(ख?)ट्वेऽपि कथ्यते ।

इति द्व्यक्षरचान्ताः ।

---

348. Sl. no. AC 174
350 Sl. no. C 175
351 A स्थिताद्यपसमासेषु; E सिताद्यपथमासेषु for prior half
354. Cf *NR ŚĀŚ*, *AT*. etc. ACD वर्चा for चर्चा.B वर्चेश्चास्यासर्चितयोः for post. half.E reads for the whole line: अर्चाप्रतिमयोर्वार्चामस्थासकर्चितयोः (corrupt)
355 Cf notes. ACDE शोचः for शोचिः
356. Mss. read –भेदेपि for –भेदेऽभि–
358 C –पट्णयोः, E –पर्णयो. for –पट्टयो
359. Mss स्थूले for तूले; cf notes
360. AD प्रापन्न– Sl. no. ABCD. 180
362. ABCD °पणे; E °पर्णौ for °व्रणे; cf.notes

विपर्यासे विस्तरे च **प्रपञ्चः** संचयेऽपि च ।
**श्वेतरोचि**स्तु लावण्ये चन्द्रे गर्भे हलायुधे ।

इति त्र्यक्षरचतुरक्षरचान्तौ ।

छ इत्याच्छादनेऽब्जे च छ क्लीबे संवृतौ पुमान् ।
त्रिष्वयं निर्मले नित्ये मलिने भेदकेऽपि च ।

इत्येकाक्षरछान्ताः ।

**गुच्छ**स्तु स्तबके स्तम्बे हारभेदकलापयोः ।
**कच्छ**स्तटेऽम्बरप्रान्ते प्रस्थेऽनूपस्थलेऽपि च ।
गुह्ये पार्श्वे नपुंसि स्याद्बृहन्मत्स्ये च कूर्चके ।
स्कन्धे कूर्मेऽप्यथो **मूर्छा** मोहव्यापारयोः स्त्रियाम् ।
तदेव वल्लकीनादे त्रिष्वच्छो निर्मले तु ना ।
भल्लूकेऽप्यव्ययं(?) **स्वच्छः** स्याच्छुद्धजलमेघयोः ।
**पुच्छः** शून्येऽवसाने च पश्चाद्भागेऽपि वालधौ ।
**तुच्छं** तु दुःखे क्षुद्रे च शून्ये स्याद्गर्हिते त्रिषु ।
**पिच्छा** शाल्मलिनिर्यासेऽप्यन्धे(?)श्वचरणामये ।
**पिच्छं** खड्गच्छदे बर्हे **उञ्छ**स्तु स्यात्परिग्रहे ।

इति द्व्यक्षरछान्ताः । त्र्यक्षरचतुरक्षरछान्तावप्रसिद्धौ ॥

**जो** जये विजये मेरौ शब्दे जेतरि मत्सरे ।
**जा** स्त्रियां देववाहिन्यां योनिसागरवेलयोः ।
**ज्या** भूमिमौर्व्योः शम्यायां वाहिन्याः पृष्ठभागके ।
**जं** कटीभूषणे पत्न्यां तेजस्यम्बुनि जन्मनि ।

---

368. Cf. *AK*. 1.2391. AD संचरे for सचये
369 C भर्गे; E गर्गे for गर्भे
370 Sl. no. C 185
376 AC °लेन तु for °ले तु ना
377. E om. स्यात् .
380. D °णोदये for °णामये. Sl no. ABC 190
381. A पंछ, BC पिछं; E पिच्छः for पिच्छ. BD उच्छस् for उञ्छम्
384. For line 384 cf. notes

जुः कीर्त्यां संगरे व्योम्नि जवपैशाचयोरपि ।
जूराकाशे बृहद्ध्वाने भारत्या जीवनेऽपि च ।

इत्येकाक्षरजान्ताः ।

मासोत्साहबलेषूर्जो व्याजः साक्षापदेशयोः ।
छद्मन्यथ कुजो वृक्षे नरकेऽङ्गारकेऽपि च ।
व्रजो गोपे च गोष्ठे च समूहेऽध्वनि पुंस्ययम् ।
अजो हरौ हरे कामे विधौ छागे रघोः सुते ।
अब्जस्तु निचुले शङ्खे पद्मे धन्वन्तरावपि ।
वेधेन्द्वोरपि तेजस्तु पुंसि दीप्तिप्रभावयोः ।
कुञ्जो दन्ते निकुञ्जेऽपि न स्त्रियां संततौ जने ।
प्रजा स्यादथ दन्ते च विप्रेऽहौ पक्षिणि द्विजः ।
स्त्रियां भासारेणुकयोराजिः पङ्क्त्यु(?)द्धभूमिषु ।
क्षणेऽपि स्यान्निजं नित्ये स्वके धर्मेऽपि च त्रिषु ।
गाम्भीर्येऽपि च बीजं तु हेतावङ्कुरकारणे ।
वीर्येन्द्रिये च वाजं स्यादाज्ययज्ञान्नयोरपि ।
पुं यवागौ जले कीर्त्यां मुनौ निस्वनपक्षयोः ।
जवे च वाजी तुरगे कङ्कपत्रे च पक्षिणि ।
पिञ्जस्त्वाधानपटलव्याकुलेषु हरिद्रके ।
तूले बले वधे युग्मे कञ्जः केशविरिञ्चयोः ।
पीयूषपद्मयोः क्लीबं ध्वजश्चिह्नपताकयोः ।
कीर्तिशौण्डिकशेफेषु श्रेष्ठखड्गाङ्गयोरपि ।

---

386. BD सागरे, E सगरे for सगरे
387. AD आकारे for °शे. AE भाजत्या, CD doubtful
390. B कुष्ठे for गोष्ठे. CE द्वेपि for ऽध्वनि
391. Mss. रिपो. for रघो !
392. ACDE °न्वन्तरेपि च
393. D वैद्य– वैद्य– वेद्य–
396. B भाग्या– for भासा–. AD पक्त्युद्ध–, E पंक्त्यध्व– for पङ्क्त्युद्ध (?), cf. notes
399. E –यज्ञांगयोर्
400. CE जवे for जले (both possible), see below. Sl no ABCD 200
401. ABCD जने for जवे A वाजि–; CE वारि– for वाजी
402. CE –पटले
403 ACE कुले, D कूले for तूले. D पथे for वधे. A –विरचयोः
405 AB °शेषेषु for ° शेफेषु

**न्युब्जं** तु कमठेऽपि स्यात्पुंनपुंसि कुशस्रुचि ।
अधोमुखे च कुब्जे च वक्रे वाच्यवदिष्यते ।
**गुञ्जो**ऽस्त्री गह्वरे बृन्दे घण्टायामथ कथ्यते ।
**रजो** गुणे च धूल्यां च **राजा** चन्द्रे नृपे प्रभौ ।
उपचारार्कहंसेन्द्रयक्षेष्वपि पुमानयम् ।
**पुञ्जस्तु** बहले तुल्ये **गञ्जा** तु मदिरागृहे ।

इति द्व्यक्षरजान्ताः ।

**अम्भोजं** कमले मत्स्ये विश्वामित्रसुतेऽपि च ।
**जलजः** कौस्तुभे मीने तत्क्लीबे शङ्खपद्मयोः ।
**मुरजस्तु** मृदङ्गे च ढक्कामुरवयोरपि ।
**बलजः** स्यात्त्रिषु क्षेत्रे पूर्द्वारे धान्यराशिषु ।
तत्क्लीबे गोपुरे सस्ये संगतावपि तास्त्रियाम् ।
वल्गुदर्शनभूसव्यजोत्तमस्त्रीषु कथ्यते ।
**वणिक्करण**भेदेऽपि वाणिज्यायामपीष्यते ।
**अङ्गजं** रुधिरेऽनङ्गे केशे पुत्रे मदे पुमान् ।
नागरे नखरेऽपि स्यात्**सामजस्तु** गजे स्मृतः ।
**काम्बोजो** हस्तिभेदे च शङ्खदेशविशेषयोः ।
अश्वे पुंनागवृक्षे च सोमवल्के तदिष्यते ।
**काम्बोजी** माषपर्ण्यां च हिङ्गुपर्ण्यामपि स्मृतम् ।

इति त्र्यक्षरजान्ताः ।

**रागराजो** रतिपतौ दिवानाथनिशेशयोः ।

---

406. A न्यब्जं. B कर्मरोशी ; CE कर्मरे* for कमठेऽपि, cf. notes
407. AD अयो° for अधो° (ध and य are often confused in Grantha script)
411. C तुले, E तूले for तुल्ये. AD गुजा for गञ्जा
418. A पाणी–; BCDE वाणी for वणिक्
419 BCE पुत्र– for पुत्रे
420. E समाजस्तु for साम°. Sl. no. ABC 210
421 ACD कांभोजो, probably a Southern spelling, cf. L. 423 also
423. ACD काभोजी. B °वाण्यां for °पर्ण्यां
424 ADE -निशीथयो, C -निशीशयोः

राजराजः कुबेरे स्यात्सार्वभौमे धनाधिपे ।
द्विजराजस्तु विप्रेन्द्रे शशाङ्के तार्क्ष्यशेषयोः ।
धर्मराजः कृतान्ते स्याद्बुद्धदेवे तदिष्यते ।

इति चतुरक्षरजान्ताः ।

झः पुमान्भ्रमणे नष्टे प्रतापे हंसचोरयोः ।
घातरि स्यादथो झा तु मदवाग्वोरपि स्त्रियाम् ।

इत्येकाक्षरझान्ताः । द्व्यक्षरादयोऽप्रसिद्धाः ।

ज्ञः प्राज्ञे चन्द्रतनये विषये चात्मगर्वयोः ।
व्यूहे लेपे मूर्ध्नि खरध्वाने क्ली भयपद्ययोः ।
उत्ताने मूढरूपे च पण्डितैस्त्रिषु कथ्यते ।

इत्येकाक्षरज्ञान्ताः ।

दक्षिणे सरले प्राज्ञो विदग्धोदारयोरपि ।
संज्ञा स्याद्भानुभार्यायां गायत्र्यां चैव नामनि ।
चेतनायां च हस्तादेः सूचनायां च वस्तुनः ।

इति द्व्यक्षरज्ञान्तः ।

नामस्मृत्योरभिज्ञा स्यात्क्षेत्रज्ञो निपुणात्मनोः ।

इति त्र्यक्षरज्ञान्तौ । चतुरक्षरमप्रसिध्दम् ।

इति राघवीयनानार्थमञ्जर्यां चवर्गान्तवर्गाः परिसमाप्ताः ।

---

425, ACDE कुबेरः
426, CE om. lines 426–7
428. ACDE झुः for झः
429. Col. C इति झांताः. B द्व्यक्षरादिझान्तोऽप्रसिद्धः
430. E °वर्गयोः for °गर्वयो
432 E मूर्छे° for मूढ°
433 Mss ( wrongly ) प्राज्ञे. AD °ग्धोदरयोर्
435. E हस्ताद्यैः A वस्तुनि
436 Col. ADE °रज्ञाताः. B चतुरक्षरोऽप्रसिद्धः, Mss. राघवीये. A om. नानार्थमञ्जर्यां

**टः** पुमान्करटे धूमे चापेऽर्ककिरणे ध्वनौ ।
कवाटावर्तयोः सूनौ भूव्यावृत्त्योरतु **टा** स्त्रियाम् ।

इत्येकाक्षरटान्ताः ।

देवशिल्पिनि सूर्ये च **त्वष्टा दिष्टं** तु दैवते ।
**दिष्टः** साक्षात्स्थिते काले **मुष्टिर्दैत्ये** प्रमाणजे ।
**अट्टं** भित्तिचतुष्के स्यात्क्षामेऽत्यर्थे गृहान्तरे ।
**यष्टिर्दा**मनि दण्डे स्याद्व्याप्यवत्फलकेऽपि च ।
**जटा सटा** लग्नकचे लतामूलेऽपि केसरे ।
**कोटिरग्राश्रचापाग्रसंख्योत्कर्षाश्रयेषु** च ।
**व्युष्टिः** फले समृद्धौ च स्तोत्रे **दृष्टिस्तु** दर्शने ।
ज्ञानेऽक्ष्णि **सृष्टं** क्लीबे स्यात्प्राज्यनिश्चितयोरपि ।
त्रिषु स्यान्निर्मिते मुक्ते **कष्टं** गहनकृच्छ्रयोः ।
दक्षामन्दागदेषु स्यात्**पटुः कूटं** तु न स्त्रियाम् ।
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गेऽप्यथ शोभने ।
अभावक्षेमयो **रिष्टमिष्टिर्या**गेच्छयोरपि ।
**इष्टं** संस्कारयोगे च यागे पूज्यतमेऽपि च ।
आशंसिते प्रियतमे **वाटो** वृतौ स्थलाध्वनोः ।
गृहारामप्रदेशे चावटे रोधसि पुंस्ययम् ।
**कुटी** तु स्यात्कुम्भदास्यामल्पवेश्मनि पुंसि च ।
**पट्टः** पेषणपाषाणे व्रणादीनां च बन्धने ।

---

437. Before 1.437, B reads हरिः
438. E भुव्या° for भूव्या° Col. A इति टैक
439. AD वेद- for देव- ABC तुष्टा for त्वष्टा
440. E दिष्टं for दिष्टः. Sl. no. BC 220
441. BC ग्रहांतरे
442. B वाच्यवत्. E व्याप्यवल्कलकेपि च for post. half
443. D जटासटौ
444. D -सांख्यो-
445. Cf *AK*. 1. 2411. B फल- for फले, AD स्तोम्रे for स्तोत्रे
446. AD ज्ञानेक्ष्ण-, B ** क्ष्णि
449-50. = var. *AK*. 2407-8
450. CE सिरागे
451. AD रिष्टरिष्टिर्, B रिष्टिरिष्टिर्; C रिष्टः रिष्टिर् for रिष्टमिष्टिर्. ACDE यागे चयेपि च
452. AD योगे for यागे
453 Mss वृत्तौ for वृतौ; cf. notes
454 D वटे for अवटे
455. BCE वा for च
456-7. = *MED*. 35.21

चतुष्पथे च राजादिशासनान्तरपठियोः ।
पट्टी ललाटभूषायां पट्टी लाक्षाप्रसाधने ।
विटोऽद्रौ लवणे षिद्गे मूषिके खदिरेऽपि च ।
कूटो यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे ।
मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदम्भयोः ।
दिवाकरे तत्किरणे पुरद्वारे मतङ्गजे ।
त्रुटी लेशे संशये च कालाल्पैलाप्रमाणयोः ।
कटोऽतिरेकशवयोः क्रियाकारिश्मशानयोः ।
गजगण्डे शवरथे शय्यायां च स्त्रियां मतः ।
किलिञ्जे समये पुंसि कटिः श्रोण्यां कटी स्त्रियाम् ।
वर्षे चावरणे क्लीबे कटुर्मत्सरतीक्ष्णयोः ।
मधुरादिरसे कट्वकार्याकार्य(?,प्रियेषु च ।
क्षवे प्रियङ्गौ गन्धे स्यात्त्रिषु स्त्रीलिङ्गकेऽप्ययम् ।
रोहिण्यां पूतनायां च रटस्तु गतिशब्दयोः ।
घटः कुम्भे राशिभेदे मणौ ह्रादिनि(?)वृन्दयोः ।
स्त्रियां तु घण्टालम्बिन्योश्चटुश्चाटुः प्रियंवदे ।
छटा समूहे कान्तौ च वेष्टने च वटस्तरौ ।
पिष्टादिना त्वमाङ्गल्यधामकुड्याङ्कणेषु च ।

इति द्व्यक्षरटान्ताः ।

धूर्जटिर्धूर्तचिह्ने स्याच्छंकरे चाथ संपुटः ।
समुद्गके कुरबके चारिष्टं सूतिकागृहे ।

---

457. AD om. lines 457–8
458. Cf *VL.* 77 20 cd
459. = *MED.* 35.27 cd. E पिंगे for षिद्गे
460. AD कूप–, BCE कूपे for कूटो
462. Sl no. BC 230
464. A om. the whole line and B the prior half. B क्रियाकोरि–, CE क्रियाकारी–
466. AC कटि. for कटी
467. ABD कडु for कटुर्
468. B कट्वकार्यकार्या°; C °कट्वकार्याकार्या°
469. AD गन्ध for गन्धे. Mss. read °केप्ययं (प and व being indistinguishable in Grantha and Malayalam scripts)
472 ACD °लिंबिन्योश्
474. cf. notes
475 D शर्करे for शंकरे
476. AD पुरुवके, B वरुवके; CE परुवके for कुरबके

अशुभे निम्बवृक्षे च शुभे तक्राङ्कयोः पुमान् ।
काके च फेनिले नीचे व्यसनेऽनर्थलम्बयोः ।
भाग्यहीनेऽथ **करटः** कुसुम्भगजगण्डयोः ।
काके च वाद्यभेदे च श्राद्धे चैकादशेऽपि च ।
सृगाले निन्द्यजीवे च **कपटः** कैतवेऽपि च ।

इति त्र्यक्षरटान्ताः ।

**शिपिविष्टस्तु** दुश्चर्मखल्वाटहरिशंभुषु ।
**तुलाकोटिस्तु** मञ्जीरे क्रकचे **क्रकरच्छटः** ।

इति चतुरक्षरपञ्चाक्षरटान्ताः ।

**ठः** शंकरे बृहद्ध्वाने वृत्ते वर्णेऽपि वाच्यवत् ।
स्तम्भने साहसे चन्द्रमण्डले कर्णवेष्टने ।

इत्येकाक्षरठान्ताः ।

**ज्येष्ठोऽ**ग्रजे स्त्रियां **ज्येष्ठा** देव्यां नक्षत्रशस्तयोः ।
**काष्ठा** दिक्कालहारिद्रस्थित्युत्कर्षेषु तु स्त्रियाम् ।
दारौ क्लीबमथो **निष्ठा** निष्पत्तौ यज्ञकर्मणि ।
नाशान्तयोश्च निष्कर्षे **कोष्ठो**ऽन्तर्जठरेऽपि च ।
कुसूलेऽन्तर्गृहे **कण्ठो**ऽन्तिके शब्दे गलेऽपि च ।
कामवृक्षे च मूर्खे च गूढविप्रियकारिणि ।
अलसे धुस्तुरे धूर्ते मध्यस्थपुरुषे **शठः** ।
**मठ**श्छात्रादिनिलये बलात्कारे **हठः** पुमान् ।

इति द्व्यक्षरठान्ताः ।

---

478. E नर्म– for ऽनर्थ. B °लम्बने
479. AD –जगदण्डयोः
482. B –खर्वाट–
483. A क्रकरच्छट, B क्रकरश्छट॰, C तु करच्छटः. Sl. no. ACD 240 Col. BC इति चतुरक्षरटान्तौ; D चतुरक्षरपञ्चाक्षरटान्तौ, E चतुरक्षरटान्ताः
484. E क्ते for वृत्ते
485. Col. A इति ठैकम्
486. B –सप्तयोः for –शस्तयो.
487 B काष्ठो. A स्थित्युत्कर्षे तु च; BE स्थितोत्कर्षेषु तु; D स्थित्युत्कर्षे*तु
492 ACD दुत्तुरे, B धुर्धरे; E दंतुरे for धुस्तुरे. C (by corr.) तीर्ते, (before corr.) तीर्थे for धूर्ते
493. Sl. no. AC 245, Col. A ठद्विः

**मञ्जिष्ठो** वृक्षभेदे स्यात्**कनिष्ठो**ऽतियुवाल्पयोः ।
**जरठः** कठिने जीर्णे शिथिले चोन्नतानते ।

इति त्र्यक्षरठान्ताः ।

**कलकण्ठः** कलध्वाने हंसे पारावतेऽपि च ।
**नीलकण्ठः** शिवे काके खञ्जरीटमयूरयोः ।
**लोहपृष्ठस्तु** कङ्के स्यात्**कालपृष्ठं** शरासने ।

इति चतुरक्षरठान्ताः ।

**डः** पुमान्विषये शंभौ हासे त्रासे जये ध्वनौ ।
शङ्खस्वने रौद्ररसे वृथावाचि तु **डा** स्त्रियाम् ।
त्रिषु दृढे शठे शून्ये केल्यान्दोलिकयोरपि ।
**डं** क्लीबे डामरे दुर्गे वधे डमरुकेऽपि च ।

इत्येकाक्षरडान्ताः ।

**दण्डो**ऽस्त्री लगुडे मानभेदे सैन्ये दमे यमे ।
मन्थानोपाययो राज्ञां शासने मद्यकोणयोः ।
धनप्रकाण्डहिंसासु चण्डांशोः पारिपार्श्वके ।
अश्वे स विंशतिशताङ्गुलौ यष्ट्यां प्रकीर्तितः ।
**पिण्डो** देहे जपापुष्पे निवासे सिल्हकेऽपि च ।
**काण्डो**ऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।
अश्वे मन्द्रे न पुं नाले तरुस्कन्धे रहस्यपि ।

---

495. BC जठरः. Col. A ठत्रि
496. BD कल्कंण्ठः
498. Col. A इति ठांताः
499. B हंसे for हासे
501. B transp. त्रिषु and दृढे
502. ACD डमल्ले Col. A इति डैकम्
503. E सैन्य-. ACDE मदे for दमे
504. B मत्य- for मद्य- Sl no. AC 250
505. B धनु- for धन-
506. AD °ताड्गुल्यां
507. ABD जटापुष्पे
509. E न पुंनागे

इभस्तम्बेऽपि च स्त्री वा तु स्यात्पिप्पलिचव्ययोः ।
**भाण्ड**मस्त्री नदीपात्रे भाजने चामरेऽपि च ।
स्यादश्वाभरणे मूलवणिग्द्रव्ये च मन्त्रके ।
**चण्डा** धनहरीशङ्खपुष्प्योः पुंस्यतिकोपने ।
**चण्डी** कात्यायनीहिंस्रकोपनस्त्रीषु संमता ।
**क्रीडा** केलिप्रकारे स्यात्खेलावज्ञानयोरपि ।
**गुडः** स्याद्गोलके हस्तिसंनाहेक्षुविकारयोः ।
**व्याळ(ड)ः** सर्पे पशौ मांसे भूगोवाक्षु **त्विडा इळा** ।
बुधपत्न्यां यज्ञपात्रे **क्ष्वेडा** वंशशलाकयोः ।
दन्तोष्ठवाद्ये शब्देऽस्त्री पुंसि कर्णमले विषे ।
**नाडी** काले षट्क्षणे स्यात्सिरायां मरुदादिषु ।

इति द्व्यक्षरडान्ताः ।

**वरण्ड**स्त्वन्तरावेद्यां युध्यतोर्गजयोर्द्वयोः ।
संदोहे मुखरोगे च काल्यावर्ता(र्त्य ?)सिधेनुषु ।
**करण्डो** मकुटे पात्रे **कारण्ड**स्तु खगान्तरे ।
**कोदण्डो** राशिभेदे स्यात्कार्मुके च न तु स्त्रियाम् ।
**तुलादण्डो** मानदण्डे **चर्ममुण्डा** तु चर्चिका ।

इति त्र्यक्षरचतुरक्षरडान्ताः ।

**ढः** पिशाचे भये काले जडे गायकरागयोः ।
ध्वनौ पान्थे नपुंसि स्यात्तूर्ये च ज्ञानमूर्खयोः ।
ढक्कायां स्त्री गुणे सर्पे त्रिषु स्याद्गूढसौम्ययोः ।

इत्येकाक्षरढान्ताः ।

---

510. ABD °स्तभे for °स्तम्बे E –चाव्ययोः
513. E °पुष्पोरस्याति° for °पुष्प्यो· पुस्यति°
514. E कोपनस्त्रिषु संमतं for post half
515. Mss. ( wrongly ) खला– for खेला–
516. A गुळः. Mss. (wrongly) हस्ते for हस्ति –
518. E षडा for क्ष्वेडा
520. AD डीकाले षट्क्षणेपि स्यात् for prior half CD सीराया for सि°
521 Mss. almost परंडसंतरा° (corrupt).
522. B कल्यावर्तासि°, E काल्यापद्मासि° for काल्यावर्तासि°
524. A तु न तु, B तु न त [तु] for च न तु
524 After this line, E reads इति त्र्यक्षरडाताः
525. Sl no. ABCD 260
526. ABCD पिशाच– for °चे

**बाढो**ऽण्डजे दृढे पुंस्त्री प्रतिज्ञायां भृशे नपुम् ।
शुभावहेऽनुमाने च **गूढं** तु त्रिषु ना दृढः ।
शक्ते स्थूले च **व्यूढस्तु** विन्यस्ते संहतावपि ।
ब्राह्मणे पृथुलेऽपि स्याद्गाढं ध्वान्ते दृढेऽपि च ।

इति द्यक्षरढान्ताः ।

**प्रगाढं** तु भृशे कृच्छ्रे **मुसृण्ढिः** शस्त्रमूर्खयोः ।
**समूढः** पुञ्जिते भुग्नेऽपस्मारे च धुरंधरे ।

इति त्र्यक्षरढान्ताः । चतुरक्षरमप्रसिद्धम् ।

**णशब्दस्तु** पुमाञ्जारे भैरवे कण्टके ध्वनौ ।
**णा स्त्रियां** ध्वजिनीशय्याधेनुनासाकृपासु च ।
**णं** सरोजदले ज्ञाने त्रिषु निस्तुषवस्तुनि ।

इत्येकाक्षरणान्ताः ।

**गुणो**ऽप्रधाने ज्यासूतरूपादिषु वृकोदरे ।
स्तम्भे संध्यादिसत्त्वादिशब्दादिहरितादिषु ।
अभ्यासेन्द्रियविद्यादिपटुत्वाद्यर्जुनेषु च ।
द्रव्याश्रिते नीतिशास्त्रे सांख्यादिविनयादिषु ।
शौर्ये धैर्ये च गाम्भीर्ये कूपके दधिलक्षणे ।
न स्त्रियां स्यादौदनिके चाथ **द्रोणस्तु** पर्वते ।
आढकानां चतुष्के च वायसे नीवृदन्तरे ।
कृपीपतौ च **द्रोणी** तु गवां घासपरिस्थले ।

---

529 E भृशं for भृशे
530. B त्रिषु वा; CE त्रि**, D तिषु न
531. B स्थूले च शक्ते (by transp ). B संहतेपि च. E हसतावपि, metathesis
532. E गाढ- for गाढ. B गाढस्वाते मढेपि च for post. half
533. AB मुसण्ठिः; C मुसण्ढि ; D मुसण्ढिः, E मुसुण्ढिः (all these words being peculiar are not traceable)
534 E सुमूढः पूजिते मुग्ने for prior half
536. ABD धेनू- for धेनु-
538. Mss. प्रधाने for ऽप्रधाने
540. A सभ्यसेन्द्रिय°; B अभ्यस्ते क्लीव°. ACDE पट(E °ड)तात्वर्जुने°
543. E द्रोण्यस्तु for द्रोणस्तु
544. AD ऽपि for च. E निवृतंतरे (sic)
545. Mss. कृपीततौ (corrupt). E घात- for घास-

स्त्रियां काष्ठाम्बुवाहिन्यामथ **भ्रूणो**ऽर्भकेऽपि च ।
स्त्रैणगर्भेऽथ **बाण**स्तु बलिसूनौ शरे पुमान् ।
**कणो**ऽतिसूक्ष्मे धान्यांशे पिप्पल्यां जीरके शरे ।
**वेणी** स्यात्कचबन्धे च जलस्रोतसि चाल्पके ।
**घोणी** भूदारकेऽपि स्या**देणी** तु मृगयोषिति ।
**गणः** समूहे प्रमथे गणनायामपि स्त्रियाम् ।
सेनाविशेषे वितते **मणी** रत्नेऽपि कथ्यते ।
**पणो** द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ।
ताम्रिके कार्षिके कुक्कुटायुधादिपरिग्रहे ।
**कुणि**स्त्वौषधभेदे च कुकरेऽपि च पुंस्ययम् ।
**स्थाणुः** शर्वे स्थावरादौ स्थिरे कीले प्रकीर्तितः ।
**वर्णो** द्विजादौ शुक्लादौ स्तुतौ **वर्णं** तु वाक्षरे ।
विलेपने कथायां च गुणरूपयशःसु च ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः **क्षणः** ।
रवे युद्धे **रणः** पुंसि ध्वनिमात्रे **कणकणौ** ।
**ऊर्णा** मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
**स्थूणा** स्तम्भे गृहस्य स्याल्लोहादिप्रतिमासु च ।
स्पृहापिपासयो**स्तृष्णा** जुगुप्सा करुणा **घृणे** ।
**तीक्ष्णं** समुद्रलवणे विषे लोहादि**सैन्ययोः** ।
युद्धे त्रिषु खरे क्षारे कटौ चात्मघ्नि पुंसि वा ।
**प्राणो** हृन्मारुते बोले काव्ये जीवेऽनिले बले ।
**तार्णं** तु तृणजाले स्यात्क्लीबे **त्राणं** तु रक्षणे ।
**कृष्ण**स्तु केशवे व्यासे कोकिलेऽर्जुनकाकयोः ।

---

549. E चाल्हके for चाल्पके
550 ACDE प्रेणी for एणी
551. E प्रथमे for प्रमथे
552. Mss. मणिरत्नेपि
553. = *AK. l* 2427
554. Mss. transp.ll.554and 555 तात्रिके
555. AC कुणीस्, D तूणीस् for कुणिस्. AD कुक्करे, E तुकरे for कुकरे. Sl. no. ABC 270
557. E चाक्षरे
558. E विलेपनकथाया
560 Mss कुणः कुणौ
व व
564. Sl. no. A 280 ; C 275
566. Mss, बाले for बोले and ऽनले for ऽनिले
567. E तृणशाले
568.° E कोकिलार्जुन–

शूद्रे तामिस्रपक्षेऽग्निकालिनीलगुणेषु च ।
**कृष्णा** तु द्रौपदीनीलीहरक्रूरेष्वपि त्रिषु ।
पिप्पल्यां च तुलस्यां च क्लीबे लोहमरीचयोः ।
दुरिते मेचके द्रव्येऽथो **श्रेणिः** कारुसंहतौ ।
रथ्यापङ्क्तौ सेकपात्रे नितम्बे **श्रोणिरि**ष्यते ।
**वृष्णिस्तु** यादवे मेषे जयन्तेऽपि च कथ्यते ।
**कर्णः** श्रोत्रे सूर्यपुत्रे **तूर्णं** शीघ्रे तदव्ययम् ।
**जिष्णुर्जे**तरि देवेन्द्रे विष्टरश्रवसि स्मृतम् ।

इति द्व्यक्षरणान्ताः ।

**तरुणस्तु** नवे यूनि मद्ये प्रथम उत्कटे ।
**अरुणः** कपिले कुष्ठे संध्यारागेऽर्कसारथौ ।
अव्यक्तरागे निःशब्दे द्रव्ये त्रिषु निरूपितः ।
स्त्रियामतिविषाश्यामामञ्जिष्ठात्रिवृतासु च ।
**द्रविणं** तु बले वित्ते काञ्चनग्रहभेदयोः ।
**शरणं** गृहरक्षित्रोर्वधे च **करणः** शिशौ ।
शूद्राविशोः सुतेऽपि स्यात्**करणं** रतिबन्धने ।
प्राणे च साधकतमे नृत्तसंस्थानकर्मणोः ।
क्षेत्रगात्रेन्द्रियेषु स्याद्ववादावङ्गहारयोः ।
संवेशेऽप्यथ यन्त्राणां बन्धने रक्षणेऽपि च ।
**ग्रामणीर्ना**पिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
**हरिणः** स्यात्कुरङ्गे च पाण्डरेऽपि प्रकीर्तितः ।
**हरिणी** स्यान्मृगीहेमप्रतिमाहरितादिषु ।
वृत्तभेदे यूथिकायां दूर्वादौ सुरयोषिति ।
**दक्षिणः** सरलोदारपरच्छन्दानुवर्तिषु ।

---

569. E –नीले गुणेषु च
570. E –कृष्णेष्वपि for –क्रूरे°
574. Sl. no. C 280
577. B प्रमथ
578. A (before corr.) करुणः
584. ABC सायकतमे, (ध and य are confused in Grantha script)
585. C क्षेत्र. AD बद्धा(D °वा)दाव (D°वा) ङ्गरागयो ; B वपादा°; CE पवादा° for ववादा°
588. B च for ऽपि
589. E मृगे for मृगी–

दानद्रव्ये **हर्षणं** तु योगभेदे मदेऽपि च ।
श्राद्धदेवे **विषाणं** तु पशुशृङ्गेभदन्तयोः ।
क्रोधे वराहदंष्ट्रे च पुंनपुंसकयोरपि ।
**प्रवणः** क्रमनिम्नोर्व्यौ प्रह्वे ना तु चतुष्पथे ।
**संकीर्णौ** निचिताशुद्धौ **श्रीपर्णं** कमलेऽपि च ।
बिल्वेऽथ **ईरणं** शून्ये ऊषरेऽपि प्रचक्ष्यते ।
**प्रमाणं** हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
प्रतीच्यां च सुरायां च **वारुणी** स्याद्वणिक्पथे ।
विपणिश्च **करेणुस्तु** वारणानां च योषिति ।
**कारणं** करणे हेतुवादयोः शेखरेऽपि च ।
यातनायां हस्तिसूत्रे मण्डनाङ्कणयोरपि ।
**मार्गणो** याचके बाणे प्रार्थनेऽन्वेषणेऽपि च ।
**लवणो** रसरक्षोब्धिभेदेषु त्विषि चेष्यते ।
**करिणी** हस्तिपिप्पल्यामभिप्रायगजस्त्रियोः ।
**सारिणी** अल्पसरितां(ति ?)**रोहणो** रत्नपर्वते ।
**निर्वाणं** निर्वृते मोक्षे सुखे नग्नेऽपि हर्षणे ।
सुवर्णप्रतिमायां च नाशे च गजमज्जने ।
**चारणो** नित्यसंचारे पुंसि स्याद्देवगायके ।
**लक्षणं** नाम्नि चिह्ने च गुणे निर्वाचनेऽपि च ।
पद्यादौ सुन्दरे भाग्ये भूषणादावपीष्यते ।

इति त्र्यक्षरणान्ताः ।

**तमोमणिस्तु** खद्योते नीलमण्यामुडौ शशौ ।
**परायणमभिप्रीतौ** तत्पराश्रययोरपि ।

---

592. B च संमते, CE मुदेपि च
594. CD क्रो(प्रो ?)थे
596, C निशिता°
597, B इरिणं. AD प्रवक्ष्यते, C प्रचक्षते
598. = *NSK*. 2.36.45 ACD °यत्ताप्रमादिषु, E यत्नाप्रमादिषु
599. Sl. no. A 290; C 280
600. A च for तु
606. Mss. read (wrongly) रोहणे
609. Mss --संचारौ
610 E निर्वचने
611 E दूषणादौ
612. B शिशौ for शशौ
613. E °प्रेतौ for °प्रीतौ

**पारायणं** समासङ्गे कार्त्स्न्ये पारगतावपि ।
सरोजिन्यां **पुष्करिणी** हस्तिन्यां च जलाशये ।
रोमावल्यां **शिखरिणी** वृत्तभेदरसालयोः ।
स्त्रीरत्ने मल्लिकायां च स्यादु**द्गिरण**मुन्नये ।
वान्तान्नेऽथ रणारम्भे गोपुरे पुरनिर्गमे ।
घण्टापथे **संसरण**मसंबाधे चमूगतौ ।
प्राण्युत्पादे **मेघमाणि**र्मेलाम्बुमलिनाम्बुनोः ।

इति चतुरक्षरणान्ताः ।

**परिभाषण**मालापे नियमे प्रतिभाषणे ।
निन्दोपलम्भवचने ग्रन्थभेदावलम्भयोः ।
**क्रोडीकरण**माश्लेषे आलिङ्गनवराहयोः ।

इति पञ्चाक्षरणान्ताः ।

इति राघवीयनानार्थमञ्जर्यां टवर्गान्तवर्गाः परिसमाप्ताः ।

**तः** पुंसि कोपे पुच्छे च संभोगे निश्चयेऽपि च ।
धातुवादविधौ चोरे प्रकृतार्थे तु त्रिष्वयम् ।
करुणायां तु **ता** स्त्री स्याद्धातुवादे तदव्ययम् ।
**ते** क्रीडने चाभिधेये **तृट्** पिपासेहयोः स्त्रियाम् ।
**स्वित्**प्रश्ने च वितर्के च **तुः** स्याद्भेदेऽवधारणे ।

इत्येकाक्षरतान्ताः ।

---

614. =*AT*. 76. 122; cf *AS*. 119 89, *MED*. 52 103 E समाभ्यगे. Mss कार्त्स्ये पर(E °रि)गतावपि

615. C सरोजन्या

617. AD उद्गारणम्, BCE उद्गरणम् Sl. no.: CD 290

619. ABE चमूपतौ

620. CD मेळ°, E मेल° for मेघ°

623 Col AD राघवीये (omitting नानार्थमञ्जर्यां), C om राघवीये

624. E तुच्छे for पुच्छे

625. B त्वयं त्रिषु (by transp. )

626. CE करुणा धातुता स्त्री स्यात् for prior half

627. Mss. °सेहये for °सेहयो.. Sl. no. C 295

रीतिः प्रचारे स्यन्दे च प्रकारे लोहकीटके ।
आरकूटे प्रवासे च डिम्बे गमनदुःखयोः ।
अतिवृष्टावनावृष्टौ शलभे मूषिके शुके ।
अत्यासन्ने च राजानश्चाथो जातिस्तु जन्मनि ।
छन्दोलंकारसामान्यधात्रीगोत्रेषु कीर्तितः ।
पराध्यर्यजन्मनि श्रेष्ठे मालत्यां स्यादथो रतिः ।
स्मरप्रियायामिच्छायां सुरते क्रीडरागयोः ।
जातः स्यादुन्नते वृद्धेऽप्युच्छ्रितोन्नद्धयोरपि ।
रीतिः स्वभावे स्रवणे द्वति(?)प्रकृतिसौख्ययोः ।
धृतिर्योगे धारणे च प्रवृद्धौ प्रीतिसौख्ययोः ।
प्रज्ञानाध्वरधैर्येषु पुष्टे स्याच्छन्दसि स्त्रियाम् ।
भूतिर्भस्मनि मातङ्गशृङ्गारे जन्मसंपदोः ।
सत्तायामपि वृत्तस्तु वर्तुलेऽतिदृढे पुमान् ।
स्वरूपे चरिते पद्ये जीवने वर्तनेऽपि च ।
स्याद्वृत्तिर्नाट्येन्द्रजाले कौशिक्यादिकृषीषु च ।
विचारे स्तम्भने ज्ञाने स्नेहे वर्तनजीवने ।
लो(ला?)भे कवीनां रचनाभेदे क्लीबे तदुच्यते ।
वित्तं ख्याते धने लब्धे क्लीबे ज्ञाते विचारिते ।
ऋतिर्गतौ जुगुप्सायां स्पर्धामङ्गलसाधके ।
गतिर्मातृपणायां(?)च ज्ञाने यात्राभ्युपाययोः ।
धूर्तः स्यात्खण्डलवणे शठधुर्धूरयोरपि ।

---

629. Mss. ईतिः (B इति) for रीति ; cf. notes. B लोहकण्टके
630. A ढबे for डिम्बे
636. जातः is doubtful. B °प्युचितो°, C °प्युश्रितो°, D °प्सुच्छ्रितो°
637. ACDE श्रवणौ, B श्रवणे for स्रवणे B दूरप्रकृति°. AB –सौखयोः Sl. no. ACD 300
638. B om. lines 638–9
639. E पृष्ठे स्याच्छिरसि स्त्रिया for post. half
640. B जव– for जन्म–
641 E °यामप्रवृत्तिस्तु corrupt
642 E पत्तने for वर्तने
643 E स्याद्वर्तिनाट्येद्रजालकेशिक्यादिकृतीषि वा corrupt
646. D वित्ते for वित्त. BC खाते, E धाते for ख्याते A लब्धो
647. Mss. read गतिर् for ऋतिर्; see notes
648 E मात्रपणायां, cf. notes
649. CE om (hapl.) lines 649–50. AD °दुक्रूरयोर् for °धुर्धूरयोर्

**दन्त** उन्नतपाषाणे सानौ दंष्ट्रनिकुञ्जयोः ।
**दन्ती** तु वारणे क्रोडे श्वाने व्याघ्रे मृगाधिपे ।
ओषधीनागहेरम्बसोमेष्वप्यथ गौरवे ।
प्रस्तावादौ च सेवायां **भक्तिः** स्याद्भागपङ्क्तयोः ।
**अन्तस्तु** भागेऽवसिते रचनायां च तत्परे ।
मृतौ निषेवणे रम्ये समाप्तावग्रमध्ययोः ।
स्वरूपे च समीपे च पुंलिङ्गेऽपि प्रकीर्तितः ।
**हन्त** हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।
**लिप्तं** विषाक्ते भुक्ते च भ्राच्यवत्स्याद्विलेपिते ।
**भ्रान्तिर्भ्रमणमिथ्यानवस्थितास्वथ** ब्रह्मणि ।
**मन्तुर्ज्ञाने** मनुष्यापराधयोः स्याच्ततोऽव्ययम् ।
**बतामन्त्रणसंतोषखेदानुक्रोशविस्मये** ।
**हरिद्वर्णविशेषेऽश्वे** दिशि तृणदिनेशयोः ।
**तिक्तो** रसे मदे गन्धे रोहिण्यां च कषायके ।
**सेतुः** स्थलविशेषे स्याज्जलबन्धेऽपि पुंस्ययम् ।
**हेतिर्ज्वालांशुखड्गेषु** तुरङ्गे **हेतु** चास्त्रियाम् ।
**यावत्तावत्परिच्छेदे** स्यात्साकल्यनिपातयोः ।
**केतुर्ध्वजे** द्युतौ श्रेष्ठे ग्रहोत्पाताग्निलक्ष्मसु ।
**वार्तं** फल्गुन्यरोगे तु स्त्री कृष्यां द्यूतदन्तयोः ।
**वार्ता** वृत्तिजनश्रुत्योस्त्रिष्वप्सु च घृतामृते ।
**पत्तिः** पदातौ पुंसि स्यात्सैन्यभेदे गतौ स्त्रियाम् ।
**पङ्क्तिश्छन्दसि** वीथ्यां च दशकेऽपि प्रचक्ष्यते ।
स्यात्प्रभावे प्रकरणे धारणे प्रियसौख्ययोः ।

---

650. A उन्त; B *न्त for दन्त. AD –निकुंदयोः
652. E om. थ गौ
654. ACDE °स्त्वभागे
656. Sl. no. ACD 310
658. B विषार्तें. AD विलोपिते
659. E om. भ्रमण and स्व
660. ACD मंता. BE तदव्ययं
662. C om. तृण and E शितृण. Sl. no. C 313
667. ABD गृहो°
668. E om द्यूत
671. BC दशमेपि, E *शरेपि for दशकेपि. BE प्रचक्षते
672. Cf. notes. E प्रभावो

श्रुतिः श्रोत्रे श्रुते वेदे वार्तायां श्रौतकर्माणि ।
श्रुतं शास्त्रावधृतयोः स्मृतिर्ज्ञानपुराणयोः ।
हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि ।
व्यक्तः प्राज्ञेऽपि स्पष्टार्थे प्रपञ्चे विशदे पुमान् ।
व्यक्तिः स्वरे च बीजे च श्रेष्ठे मूर्तौ दृढेऽपि च ।
यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ।
पतौ पोतो यानपात्रे शिशौ चापि पुमान्भवेत् ।
मृते प्राण्यन्तरे प्रेतः पार्थिवे तनये सुतः ।
भूभृद्राजनि शैले स्यादनन्ते कमठेऽपि च ।
ऋतुः स्त्रीकुसुमे हेमन्तादिष्वप्यथ पारदे ।
सूतः स्यात्त्वष्टृसारथ्योर्वन्दिसुष्ठुतयोरपि ।
ब्राह्मण्यां क्षत्रियाज्जाते क्षत्ता स्यात्सारथावपि ।
क्षत्रियायां शूद्रजेऽथ शक्तिः प्रभ्वादिषु स्मृतम् ।
कासूसामर्थ्ययोश्चाथ मूर्तिः काठिन्यकाययोः ।
सातिर्दानेऽवसाने स्यादार्तिश्चापाग्रपीडयोः ।
धातुर्वागादिशब्दादिगैरिकादिबकादिषु ।
श्लेष्मादिरसरक्तादिभूवादिकनकादिषु ।
महाभूतादि त(स?)द्भावे योनौ च स्यात्पुमानयम् ।
उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ।
क्षितिर्भूम्यां गृहे नाशे द्वयोः स्याद्गुप्ति रक्षणे ।
शौर्ये दीर्णे च भूगर्ते युगपर्याप्तयोः कृतम् ।
फले क्रियायां विहिते हते वाच्यवदिष्यते ।
भूतं क्ष्मादावृते युक्ते प्राण्यतीते समे त्रिषु ।
पुंसि देवलके प्राप्ते कल्पिते गुह्यकेऽपि च ।

---

673. B om. (hapl.) this line and prior half of the next. AD शास्त्रे for श्रोत्रे. CD स्वरे for श्रुते
676. Sl. no. ACD 320
677. A धूर्ते for मूर्तौ
681. CE शैल for शैले
686. AD शक्ति. for चाथ
689. AB भूपादि (प and व are indistinguishable in G and M scripts)
692 BC प्रेह
695 ACD प्राण्यातीते. Sl. no. CD 330
696. AC देवलगे

न्यायोपमानयोस्तृप्तौ महत्पृथुलपूजयोः ।
राज्ये चातः शुक्लवर्णे श्वेतं रजतनागयोः ।
द्वीपाद्रिकुष्ठकुम्भीषु पुंलिङ्गे स्याद्वराटके ।
कपर्दिकायां स्त्रीलिङ्गे स्याज्जगद्विष्टपे पुमान् ।
इङ्गे वायौ ना जङ्गमे मृगषण्डेऽप्ययं त्रिषु ।
**रक्तं** नील्यादिरागे स्यादसृक्कुङ्कुमयोरपि ।
भृत्ये वर्णे त्रिषु **सितः** शुक्रे श्वेतेऽर्जुने पुमान् ।
बद्धेऽपि स्त्री शर्करायां कर्पूरे कथ्यते त्रिषु ।
**शुक्तस्तु** परुषे चाम्ले **शुक्तिः** कज्जलभाजने ।
मुक्तासंभवपात्रे स्यात्**कीर्तिर्**यशसि वार्तयोः(?)
प्रदेशे कर्दमेऽपि स्याच्**छिती** धवलमेचकौ ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च **सत्** ।
भवान्यां तु **सती** स्त्री स्यान्नक्षत्रे तु नपुंसकम् ।
**भास्वान्**कान्तिमति सूर्ये **वीरुत्**स्त्री गुल्मवातयोः ।
**प्रति** प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
**इति** हेतुप्रकरणप्रकारादिसमाप्तिषु ।
**स्वस्त्या**शीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्य**ति** ।
**सकृत्**सहैकवारे स्या**दारा**द्दूरसमीपयोः ।
प्रतीच्यां चरमे **पश्चादुता**प्यर्थविकल्पयोः ।
पुनःसदार्थयोः **शश्वत्साक्षा**त्प्रत्यक्षतुल्ययोः ।
**कुतस्तु** निह्नवे प्रश्ने पञ्चम्यर्थेषु साधु तत् ।
अलिङ्गं प्रतिशब्दादौ नित्यं सूरिभिरीरितम् ।

**इति द्व्यक्षरतान्ताः ।**

---

697. E तप्तौ for तृप्तौ
699. AE द्वीपादि°
701. Mss. जगमे for जङ्गमे
703. CE श्वित्रे for श्वेते
704. E (by mistake) कूर्परे for कर्पूरे
705 Mss. (wrongly) पुरुषे for परुषे AC चाम्ये for चाम्ले
707. A (before corr.) प्रादेशे. AB शीतिर्, CD शीति for शिती
708. A व्याधौ for साधौ
710 BCDE कातिमती (metrical lengthening)
713. A लापने for लङ्घने
715. Sl. no BCD 340
717. E °म्यर्थे तु for ° म्यर्थेषु
718. E ईरितः

अमृतं वारिसुरयोर्निर्वाणे चातिसुन्दरे ।
अयाचिते यज्ञशेषे पुंसि धन्वन्तरेऽपि च ।
पीयूषे च घृते दीक्षावाचार्ये विबुधेऽपि च ।
हरीतक्यामामलक्यां गळूच्यामपि तत्स्त्रियाम् ।
**ग्रथितं** गुम्भिताक्रान्तसंहितेषु समीरितम् ।
**अनन्तः** शेषविष्ण्वोश्चानवधौ क्लीबमम्बरे ।
स्त्रियां स्याच्छारिबादूर्वाविशल्यालाङ्गलीषु च ।
हैमवत्यां गळूच्यां च **निशान्तं** गृहशान्तयोः ।
उषःकाले नपुंसि स्याद्वनिता जनिता च ते ।
अबलात्यर्थरागेषु क्लीबं याचितदुर्गयोः ।
स्त्रैणे जलाशये चाथ **गोपतिः** शंकरे वृषे ।
सूर्यमेघेन्द्रकृष्णेषु षण्डे भर्तरि पार्थिवे ।
**आकृतिस्तु** शरीरे स्याद्रूपसामान्ययोरपि ।
**समितिः** समरे साम्ये सभायामपि च स्त्रियाम् ।
**आहतं** गुणिते नाट्ये ताडिते च मृषार्थके ।
नववस्त्रेऽङ्गभेदे च नामके चाथ **रोहितः** ।
रुधिरे शक्रधनुषि धीरे वर्णे कुचन्दने ।
गोशीर्षे च मदे भौमे कुङ्कुमे च ऋजौ तरौ ।
अस्त्रियां मीनमृगयोः **प्रकृतिः** पाञ्चभूतिके ।
प्रधाने कारणे गुह्ये जन्तौ छन्दसि मातरि ।
अमात्ये च स्वभावे च पूजायां परमात्मनि ।
**विभूतिः** संगृहीते स्याद्भस्मनि छन्नसंपदोः ।
**विविक्तः** स्यादसंपृक्ते रहस्यूर्जितपूतयोः ।
**अव्यक्तः** शंकरे विष्णौ क्लीबे तु महदादिके ।
परमात्मन्यात्मनि च त्रिषु स्यादस्फुटेऽजितः ।

---

719. E -सरयोर् for -सुरयोर्
720. B धान्व°; CE धेन्व° for धन्व°
721. A ऽपि for वि-
724. CE -विष्णोश् for -विष्ण्वोश्. B अव्ययं for अम्बरे
726. B निशात ग्रह°, C निशातग्रेह°
727. E om. (hapl.) lines 727-8. Cf. notes.
730 A सूर्यें for सूर्य-. B -जालेषु for -कृष्णेषु. BCE कर्तरि for भर्तरि
733. E मृता° for मृषा°
735. E शरे for धीरे Sl. no. CD 350
737. E °भौतिके for °भूतिके
738 A ऽजतश् for जन्तौ
740. A सा गृही° C सग्रही°. B छंद- for छन्न-
741. CE विविक्ति

अपराजितविष्ण्वीशपरमात्मसु कथ्यते ।
मनोज्ञतथ्यसुस्पष्टप्रियवाक्येषु **सूनृतः** ।
**क्लीबं** तु मङ्गलेऽपि स्यादुदन्तः साधुवार्तयोः ।
उद्धते स्याद्विधूतं तु **प्रतीतो** ज्ञातहृष्टयोः ।
**सुकेतुः** सुपताकायां यक्षसेनानिवेशयोः ।
**प्रवृत्तिस्तु** प्रवाहे स्याद्व्यापारे भ्रान्तिवार्तयोः ।
**मुहूर्तमल्पकाले** च घटिकाद्वितयेऽपि च ।
**ललितं** त्रिषु ना भावभेदे सुन्दरनृत्तयोः ।
अस्त्रियां प्रमदारामे क्रीडिते जातपल्लवे ।
**संपातस्तु** वशे योगे प्रवेशे वेदसंविदो ः ।
आसारे विजनेऽभ्यस्ते याचनाधारणार्थयोः ।
पुंसि स्यादुचितं न्याये **सीमन्तः** केशवेशने ।
स्मार्तकर्मणि **सीमान्तः** प्रमाणे ग्रामभूमिनाम् ।
**किरातो** लुब्धके देववाहिनीमत्स्यभेदयोः ।
**सरस्वान्नदमात्रेऽब्धौ** कुरुक्षेत्रकुबेरयोः ।
रसिके च **विवस्वांस्तु** देवतासूर्ययोरपि ।
पक्षिमात्रे च गरुडे **गरुत्मानथ** कीर्तितः ।
**जीमूतः** पर्वते मेघे **शकुन्तौ** भासपक्षिणौ ।
**मरुतः** पवने देवे स्पृक्कायां तु स्त्रियामपि ।
**स्थपतिः** कारुभेदे च कञ्चुकिन्यपि वर्तते ।
**वृत्तान्तः** स्यात्प्रकरणे प्रकारे कात्स्न्यर्वार्तयोः ।
**आनर्तः** समरे नृत्तस्थाननीवृद्विशेषयोः ।
**कृतान्तो** यमसिद्धान्तदैवाकुशलकर्मसु ।
**शुद्धान्तः** कक्ष्यभेदे च नृपस्यासर्वगोचरे ।
गुह्ये चान्तःपुरे **दृष्टान्तः** शास्त्रे च निदर्शने ।

---

745. E सूत्रित for सूनृतः
747. E उच्यते for उद्धते. D विधीतं त्व- for विधूत तु Mss. प्रतीते. B ज्ञातसृष्टयो, E जातहृष्टयोः
751. B गलितं
753. A -सपदोः
755. Sl. no. CD 360
756. ABD सीमंत·
757. AC °वाहिनि. E om. नीम
761. E ह्रास- for भास-
765. E °नीमृद्धि°
767. ACD कक्षि-; B पक्षि- for कक्ष्य-

विस्तारवल्ल्योर्व्रततिः **वसती** रात्रिवेश्मनोः ।
**महती** पूजने वीणाभेदे स्यान्नारदस्य तु ।
**जगती** छन्दसि भुवि **पक्षतिः** पक्षभेदयोः ।
मूले हंसमयूरादौ (देः?) **सिकता** वालुका अपि ।
**आयतिस्तू**त्तरे काले स्याद्दीर्घत्वप्रभुत्वयोः ।
**बृहती** क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ।
**वासिता** स्त्रीकरिण्योश्च कृतवासे नपुंसकम् ।
भाविते स्तम्भितेऽपि स्याच्छादिते च त्रिषूच्यते ।
**निमित्तं** कारणे चिह्ने **रजतं** हेमरूप्ययोः ।
सिते त्रिषु स्यान्नक्षत्रे हारवारणदन्तयोः ।
**संस्कृतं** लक्षणोपेते कृत्रिमे च प्रकीर्तितम् ।
**निवातस्त्वा**श्रयेऽवाते शस्त्राभेद्ये च वर्म यत् ।
जातोन्नद्धप्रवृद्धेषु द्वौ स्यादुच्छ्रित **उत्थितः** ।
वृद्धिमत्प्रोद्यतोत्पन्नावा(०न्वेष्वा)**दृतौ** सादरार्चितौ ।
**लोहितो**ऽङ्गारके रक्ते **विहितं** युक्तकर्मणोः ।
अभ्यस्तेऽप्यु**चितं** न्याये तथा परिचितेऽपि च ।
**आवर्तः** सलिलभ्रान्तौ **संभ्रान्तौ** तुरगागमे ।
**प्रचेता** वरुणे श्रेष्ठे धीमत्यपि च वर्तते ।
**उद्धतो**चानितेऽपि स्यात्**कीलितं** बन्धितेऽपुमान् ।
**पुरस्तात्प्र**थमे प्राच्यां पुरोर्थेऽग्रत इत्यपि ।
**अभितः** शीघ्रसाकल्योभयता(तो?)भिमुखेषु च ।
समीपे च पुरस्ता(?)दावलिङ्गं स्यात्ततः पुमान् ।
**मूर्छितस्तु** स मूढे स्यात्सोच्छ्रये च तदीरितम् ।

---

770. After line 770, Mss. ins (cf. l. 732)
* समितिः संगरे सङ्गे सभायां च स्त्रियामपि ।
771. CE छन्दसी. BCE भूमौ for भुवि
773. BCE उत्तरः for उत्तरे. Sl. no. B 340; CD 370
775. ABD वाशिता
776. B om. (hapl.) from छादिते up to त्रिषु (in line 778)
777. E हेम्नि for हेम-
780 E निवासस्त्वाश्रमेवाते for prior half, D शर्मा° for शस्त्रा°
781 स्यात् ungrammatical. ACD उद्धित.; B उत्थितं, E उद्धत
784. Mss. उचित(E °ता)न्याये
785. AD °गाटघे, BC °गागवे (both corrupt) for °गागमे, cf notes

दशान्तस्त्वतिवृद्धे च वर्त्यग्रेऽपि च पुंसि वा ।

इति त्र्यक्षरतान्ताः ।

वेण्यङ्कुरे **वंशपोतः** स्यान्महाकुलसंभवे ।
**भगदत्तबृहद्दत्तौ** क्षितिपालकनामनी ।
**अवधूतोपेक्षिते** च कम्पिते चाश्रमान्तरे ।
अपक्रान्ते **भूचलितः प्रतिपत्तिस्तु** गौरवे ।
प्राप्तौ प्रवृत्तौ प्रागल्भ्ये कर्तव्यज्ञान उच्यते ।
**उन्मीलितं** समुत्कीर्णे समग्रोन्मेषयोरपि ।
**दिवाकीर्तिस्तु** चण्डाले नापितोलूकयोरपि ।
**सरस्वती** नदीभेदे गोवाग्देवतयोर्गिरि ।
स्त्री पूजायाम**पचिति**र्द्वयोश्च स्यात्क्षयार्चयोः ।
नदीनगर्योर्नागानां **भोगवत्य**थ काञ्चने ।
रौप्येऽपि **कलधौतं** स्याद**वगीतं** तु गर्हिते ।
जन्योपश्लिष्टयोर्वाच्यलिङ्गः कुत्सितकूजिते ।
**अत्याहितं** महाभीतौ कर्म जीवानपेक्षि च ।
**अवदातः** सिते पीतेऽ**भिजातः** कुलजे बुधे ।
**पुरस्कृतः** पूजितेऽरात्यभियुक्तेऽग्रतःकृते ।
युक्ते तु संस्कृतेऽमर्षिण्य**भिनीतः** प्रचक्ष्यते ।

इति चतुरक्षरतान्ताः ।

**थः** पुंसि भङ्गे शैलेन्द्रौ तरङ्गिण्यामपि स्त्रियाम् ।
क्लीबे भयहरे शुक्ले श्यामले पृथुलेऽपि च ।

इत्येकाक्षरथान्ताः ।

**अर्थो**ऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।

---

792. AD पत्यग्रे, B वस्त्राग्रे, C वत्यग्रे
795. -धूतोपेक्षित double crasis AD श्रमातरे
801. ACD स्त्रि(C स्त्री)यामथाप्यपचितिः, E स्त्रीथाप्यपचि (corrupt) for prior half A चयोश्च for द्वयोश्च
802 B नद्या नगर्यां
803. B अविगीतं
807. ACE °तेरत्यभि°
810. E शुद्धे for शुक्ले
811 = *AK* 1. 2506

मोक्षकारणयोश्चास्था स्थानालम्बनयत्नयोः ।
अपेक्षायां च **संस्था** तु स्थितौ नाशे चरेऽपि च ।
मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो **अथ** ।
कथमादौ तथाप्यन्ते यत्ने गौरवबाढयोः ।
**पथ्या** स्त्री स्याद्धरीतक्यां पुंनपुंसकयोर्हिते ।
**तीर्थं** पात्रे दर्शने च पुण्यक्षेत्रे च पावने ।
योनौ जलावतारे च स्त्रीरजस्यध्वरेऽपि च ।
अष्टादशेऽमात्यसेनापतिपौरोहितेषु च ।
निपानागमयोर्मूले ऋषिजुष्टजले गुरौ ।
**वीथिः** पङ्क्तावश्वगतौ नाट्यभेदे गृहाङ्कणे ।
मार्गे **प्रस्थ**स्तु सानौ स्यान्मानभेदे नपुंसके ।

इति द्व्यक्षरथान्ताः ।

**सत्पथं** दिवि सन्मार्गे तारमार्गे च विश्रुतम् ।
**समर्थ**स्त्रिषु शक्तिष्ठे संबन्धार्थे हितेऽपि च ।
**खण्डार्थं**(?) तु समांशे स्याद्**व्यवस्था** कृत्यनिर्णये ।

इति त्र्यक्षरथान्ताः ।

**कर्णीरथः** प्रवहणे मञ्चे राज्ञां स्वयंवरे ।
**दशमीस्थः** क्षीणरागे वृद्धे मरणसंशये ।

इति चतुरक्षरथान्ताः ।

**दः** पुंसि दातरि छेदे **दा** स्त्रियां क्षान्तिदानयोः ।

---

812. ACDE °योश्चस्थास्थान्याल°; B °योस्वस्था-स्थानल°
813. CE स्थिते for स्थितौ
814. = *AK*. 1 2829
815. Sl. no. CD 390
817. AD पत्रे
818. CDE ज्वाला° for जला°
821. CE दीधि for वीथिः. A पथाव°
823. A हारा° for तार°
824. CD स्त्री तु; E स्त्रीति for त्रिषु B शक्तिस्थे (more correct)
825. A घटार्थं, cf. notes
826. ABCD कंठी° for कर्णी°. E प्रस्नवणे for प्रवहणे
828. = *NR*. 1 101 E दारतः for दातरि

शुद्धौ दूः परितापे स्त्री दुष्टे दिः क्षय उच्यते ।
दं क्लीबे दानवैराग्यकलत्रेष्ववलोकने ।
मेयलिङ्गस्त्वयं मूढे ग्रहान्ते द्रावके शुचौ ।
दर्शनज्ञाननेत्रेषु दृक् स्त्री द्रष्टरि तु त्रिषु ।

इत्येकाक्षरदान्ताः ।

वादी मङ्गलवाद्ये संख्यायां वैतालिके ध्वनौ ।
नन्दी वन्दी द्वौ वृषभे वंशज्ञे स्तुतिपाठके ।
कन्दस्तु सूरणे सस्ये मूले जलधरेऽपि च ।
छन्दोऽभिप्रायवशयोर्हृदाख्याचित्तवित्तयोः ।
उक्तादौ वृत्तशास्त्रे स्याद्वेदे च परिकीर्तितम् ।
स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ।
प्रतिज्ञायां च संकेते तोषणाचारयोरपि ।
भेदो द्वैते विशेषे च उपजाते विदारणे ।
मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ।
कृष्णवस्तुनि मद्येऽपि पादः प्रत्यन्तपर्वते ।
तुरीयांशे वृक्षमूले चांशौ चरणभ्रंशयोः ।
पूज्ये चाथ पदं शब्दे व्यवसायोपदेशयोः ।
वाक्ये पद्ये पदन्यासे स्थाने स्याद्वाच्यलिङ्गकः ।
त्राणे व्यवसिते चिह्ने वस्तुन्यथ गुणाधिके ।
संपद्भूतौ हारभेदे वैभवे च गदोऽस्त्रियाम् ।
आयुधे धनदे रोगे पुंसि कृष्णानुजेऽपि च ।
स्वेदस्तु घर्मसलिले अब्दो मेघे च दर्पणे ।

---

829. B दुः, CE द्रुः for दूः.
830. B क्षीबे for क्लीबे. CE °लोचने
831. CD गृहांते; E गृहाणे
832. Mss. are corrupt
834. AD नन्दिनन्दी, C नन्दिवन्दी, E वान्दिनान्दि. E वृषभौ
835. Sl no. CD 400
837. B °कीर्तित
838 AC –क्र्याकारा°
839 AC पोषणा°
842. AB पर्यंत°
843 B –भृशयोः
847 A हारभे*; D हार*दे A गतौ for गदो
848 After line 848, Mss ins.:
* भवेदुपनिषद्धर्मे वेदान्तेऽपि रहस्यपि ।
(which is an extra line, cf. line 875)

प्रभवादौ पर्वते च शादो जम्बालशष्पयोः ।
सूदस्तु व्यञ्जने पुंसि हिंसासंहारयोः स्त्रियाम् ।
ककुच्छ्रेष्ठे वृषस्याङ्गे राजचिन्हेऽपि कीर्तितम् ।
स्वादिष्टे मधुरे हृद्ये मृदू चातीक्ष्णकोमलौ ।
मन्दः शनौ तामसे च कुण्ठेमस्वैरकारिणोः ।
निर्भाग्ये चापटौ पुंसि चाल्पपूरुषमूढयोः ।

इति द्व्यक्षरदान्ताः ।

दायादौ बन्धुतनयौ तमोनुश्चन्द्रसूर्ययोः ।
वैश्वानरे च निर्वादो जनवादे च निश्चिते ।
वादाभावे चाप्ययं स्यादामोदो हर्षगन्धयोः ।
गोविन्दः स्यात्सुरगुरौ गोष्ठाध्यक्षमुकुन्दयोः ।
गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदम् ।
शारदः सप्तपर्णे स्याच्छरत्कालोद्भवेऽपि च ।
लाङ्गल्यां शारदी नव्ये वाण्यां कान्तौ च शारदा ।
प्रसादोऽनुग्रहे कार्ये प्राणस्वास्थ्यप्रशस्तिषु ।
नैर्मल्यहर्षयोश्चाथ आक्रन्दो दारुणे रणे ।
आरावे रोदने त्रातर्यङ्गदो वालिनन्दने ।
नपुंसि बाहुवलये नर्मदः परिहासके ।
नदीभेदे विषादस्तु दुःखे गरलदायके ।
विषादी शंकरे दुःखयुक्ते गरलभोजने ।
कुमुदः प्लवगाधीशे कैरवेऽपि पुमान्भवेत् ।
विनोदः शास्त्रतात्पर्ये परिहासे च धन्वनि ।
निषादस्तु स्वरे व्याधे त्र्यक्षरं चापि कीर्तितम् ।

इति त्र्यक्षरदान्ताः ।

---

852. B °स्याके B च स्त्रियां, CE blank for कीर्तितम्. Sl. no. CD 410
855. A निर्भागे
856. D om. lines 856–71, the entire portion of words of three syllables is missing
858 B वादभावे E गधहर्षयोः (by transp.)
863. Mss. (D missing) read कार्ये, but काव्ये is possible
871. BCE जंतुहिंसापरे व्याधे (CE om. it) निषादस्तु स्वरेव्यये

मेघनादो मेघशब्दे ओषधौ रावणात्मजे ।
मुचुकुन्दो नृपे वृक्षे चापवादस्तु निन्दने ।
आज्ञायां स्यात्परीवादस्तन्त्रीनादापवादयोः ।
धर्मे रहस्युपनिषत्सुप्रगल्भौ विशारदौ ।
विनोदबिन्दुः शास्त्राणां तात्पर्यज्ञे च लुब्धके ।
मेळमन्दो मषिघटे मेळामन्दमपि स्मृतम् ।

इति चतुरक्षरदान्ताः ।

धः पुं शिलीध्रेन्द्रोध्र्याने श्रीदे धन्वन्तरे घटे ।
धं वेश्मनि धने धान्ये बुधे धीस्तु धियि स्त्रियाम् ।
धूर्ना धूपे स्त्री तु कम्पे वित्ते भारे युगाश्रयोः ।
शंभोर्जटायां हेरम्बे धिङ् निर्भर्त्सननिन्दयोः ।

इत्येकाक्षरधान्ताः ।

सिद्धं नित्ये प्रसिद्धे च निष्पन्नापन्नदीप्तिषु ।
गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः ।
मृत्यौ च सरमेऽपि स्यात्संधिः सङ्गसुरङ्गयोः ।
भेदे संघट्टने मोक्षे लाभे नाट्याङ्गहर्षयोः ।
धेनौ रन्ध्रे च सिद्धिस्तु योगभेदसुरेड्ययोः ।
सुधा पयसि पीयूषे मूर्वायां स्नुहिलेपयोः ।
गङ्गायामिष्टकायां च साधुः सज्जनयोग्ययोः ।
पात्रे पूज्ये पाचके चामात्ये पूजाविधावपि ।
प्रागल्भ्ये चान्ययं क्लीबं चारौ वार्धुषिकेऽपि च ।
सिन्धुर्नद्यां नदे स्त्री स्याद्देशभेदेऽम्बुधौ गजे ।

---

873. E नन्दने
876. Mss. transp lines and 877
877. Col.: ACD इति पञ्चाक्षर°, BE चतुरक्षर°
878. A धः प्रसिळिध्रोध्र्याने; B धः प्रसिळिन्ध्रेन्द्रोर्याने, CD धः पुसिळिन्ध्रेद्रोध्याने, E धः पुशिलीन्धेद्रो ध्याने (all corrupt for prior half). B ऽपिच for घटे
879. ACDE बुधौ (°द्धौ?) AD धी तु धियि, C शीतु धियि, E शीतुविधिः for धीस्तु धियि
880. Sl. no. D 423
884 B सगरंगयो
885. B भेदे, E लोभे for लाभे
887. AD दूर्वाया for मूर्वाया
888. E सु- for सज्-
889. AD पावके for पाचके, both readings uncertain
891. CE °भेदे बुधागजे

मोक्षे समाप्तौ लाभे च पुंसि निष्पत्तियोगयोः ।
**मधु** मद्ये पुष्परसे वैशाखे माक्षिके गुडे ।
क्षीरे जले दैत्यभेदे मदवृक्षविशेषयोः ।
वसन्ते जातिमधुरे जपाकोशे द्वयोरपि ।
**विधुर्**विष्णौ चन्द्रमसि कर्पूरे राक्षसेऽपि च ।
**विधिर्**विधाने नियतौ दैवे काले विधातरि ।
कल्पे नेमौ प्रवृद्धौ स्यात्पश्चाद्भागनितम्बयोः ।
**वृद्धिरा**नन्दने वृद्धौ वर्धनेऽपि कलान्तरे ।
**वधूर्**जायास्नुषास्त्रीषु प्रियङ्गौ शटिनामनि ।
स्पृक्कायां च नवोढायां **बन्धुर्**बन्धूकपुष्पके ।
वल्लभेष्टे भ्रातरि च पुंसि तत्परिकीर्तितः ।
**स्निग्धस्तु** त्रिषु सान्द्रे च क्लीबे मसृणतेजसोः ।
**इद्धं** स्याद्वर्धने कान्तौ **मुग्धः** सुन्दरमूढयोः ।
सौम्ये नवेऽबलाभेदे **चार्धं** खण्डे समांशके ।
**बुद्धस्तु** सुगते **वृद्धः** पण्डिते च वयोधिके ।
**स्कन्धः** समुदये वृक्षे सैन्ये रूपादिपञ्चके ।
समीहने शीर्षभुजप्रकाण्डगमनेष्वपि ।
विधावृद्धिप्रकारेषु गजान्ने वर्तने **विधा** ।
**संधा** प्रतिज्ञामर्यादासंधानेष्वपि च स्त्रियाम् ।
स्पृहायां प्रत्यये **श्रद्धा** स्यादन्धस्तिमिरान्नयोः ।
चक्षुर्हीनेऽप्यलिङ्गः स्यान्मिथोऽन्योन्ये रहस्यपि ।
**वृधा** निरर्थकाविध्यो (ग्रन्थि?) पर्वण्यनार्जवे ।

इति द्व्यक्षरधान्ताः ।

---

892. Cf. notes. B लोभे for लाभे. All Mss. गोष्पति- for निष्पत्ति-, cf notes
893. E मासिके for माक्षिके
896. AB विधिर् for विधुर्
898 AD तल्पे. E प्रसिद्धौ for प्रवृ°
900 B स्नुषा च स्त्री. A प्रयागौ, C प्रयगौ
905. AD सौम्येनले
909. AD विधा*द्धि°, C विधार्धि°
910. ACD -मर्याद-
911. ACD स्पृहाय, B स्पृहायात्, E स्पृहायत्- for °या
912 C ऽप्यलिं*; D ऽप्यलिग. A चक्षुर्विहीनेप्यलिंगं
913* B वृथा. A °र्थकं. B ग्रथी, C ग्रथि. ABCE चार्जवे; D चाव्यये for अनार्जवे

विवधो विषये पुंसि पर्याहारा(रे?)ध्वभारयोः ।
न्यग्रोधः काष्ठवेण्वोश्च व्यामे वटतरावपि ।
विबुधौ सुरविद्वांसावुत्सेधः काय उन्नतौ ।
अवधिस्त्ववसाने स्यात्सीम्नि काले बिलेऽपि च ।
उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे ।
कुडुम्बव्रतवक्रेषु व्याजे पुं प्रणिधिः पुमान् ।
अतिनिक्षेपचरयोः प्रार्थितेऽथ रथस्थिते ।
वरूथो रथगुप्तौ स्यात्तिरोधत्ते(?) विवर्तने ।
समाधिर्नियमे स्थाने निपाते च समर्थने ।
प्रसिद्धः स्याद्भूषिते च ख्याते तूर्यतृतीयके ।
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
कबन्धोऽस्त्री जले दैत्येऽप्यपमूर्धकलेवरे ।

इति त्र्यक्षरधान्ताः ।

अवरोधस्तिरोधाने राजदारेषु तद्गृहे ।
समुन्नद्धः समुद्भूते पण्डितंमन्यदृप्तयोः ।
अनुबन्धः प्रकृत्यादौ दोषोत्पादे विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।
अनुबन्धेऽपि हिक्कायां भ्रष्टायामपि कथ्यते ।
गजबन्धस्तु सुरते आलाने ग्रहणेऽपि च ।
ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बने ।

914. For prior half cf notes. Mss. read विविध and °हाराध्व°
915. B घट° for वट°
918. E कर्म° for धर्म°
919. ABC -वृत- for -व्रत-. E -वक्रेषु
920. AD प्रथने, C प्रर्थने, E प्रार्थने for प्रार्थिते
921. D वरूथो. B -पि वर्तने, CE विवर्तते, D -पि वर्तते
923. AD तूर्यत्रि°, B तूर्यत्र° for तूर्यतृ°
924. =*NSK*. 2. 24. 156, *VL*. 182 36 ab; *ŚĀŚ*. 424 ab, Var. *MED*. 81. 33.
925. BCE °मूर्ध्नि
926. Mss °चारेषु (E °द्वारेषु) for °दारेषु.
928. For 928, cf. *AK*. 1. 2531; *VL*. 183. 43. B दोषोत्पाते
929. =*AK*. 1 2532, *ŚĀŚ*. 65cd, *MED*. 81. 41 cd
930. AD हिंसायां for हिक्कायां. B भृष्टायाम्
931. CD आळाने.
932. B अतिक्षेपे

अविदूरेऽप्यवष्टब्ध रुन्धे(द्धे?) क्रान्ते तिरस्कृते ।

इति चतुरक्षरधान्ताः ।

**नः** पुंसि नाभौ हेरम्बे क्लीबे **नं** ज्ञानवाद्ययोः ।
सूक्ष्मपद्यापरिक्लिष्टशून्यभिन्नेषु तत्त्रिषु ।
धनुःशब्दे स्तुतौ स्त्री स्यान्नौः काले तरणावपि ।
**नु** पृच्छायां विकल्पे च निर्निश्चयनिषेधयोः ।

इत्येकाक्षरनान्ताः ।

गमने वाहने **यानं** **भिन्नं** मिश्रे पृथक्कृते ।
**जनस्तु** पामरे लोके **घनं** स्याल्लोहमुद्गरे ।
कांस्ये तालादिके नृत्ते विस्तारेऽभ्रे दृढेऽधिके ।
सान्द्रे स्त्रियां तु मुस्तायां त्रिषु मूर्तिगुणे भरे ।
**दानं** गजमदे त्यागे पालनच्छेदबुद्धिषु ।
**स्थानं** स्थितौ च सादृश्ये संनिवेशावकाशयोः ।
युक्तार्थे कारणार्थे च युद्धनृत्तार्थयोरपि ।
**तनुस्तु** विरले काये कृशेऽल्पे च क्वचित्त्रिषु ।
**सूनुः** सुतेने सहजे वधस्थानोपाजिह्वयोः ।
गळशुण्ठिकभेदे च **सूनः** स्याद्वाच्यलिङ्गकः ।
पुष्पप्रसवयोः क्लीबं **स्वप्नः** सुप्तस्य संस्मृतौ ।
**ननु** प्रश्नानुनययोस्तोके संबोधनेऽपि च ।
**मानं** कोपेऽभिमाने च विमाने मददण्डयोः ।
शून्ये प्रमाणे प्रस्थादौ पुंसि चित्तोन्नतावपि ।

---

933. Sl. no,: CD 450
934. E भानौ for नाभौ
936. CE स्तुते नौ for स्तुतौ स्त्री
937. B नुः
940. B काळा°; CD ताळा°
941. C (before corr ) मुग्धाया
942. A (by metathesis) नादं
944. C om. (hapl.) lines 944-6
945. D विरळे
946. AD वय– (ध and य being indistinguishable in Grantha script)
947. Mss शूने (E शून्या) for सूनः
948 D स्वप्नं. A सस्मृतं
950. After l 950, all Mss. ins. (cf. lines 954-5).
*नाम प्रसिद्धे सभावनायां नामनि पूजने (AD °के)
951. Mss. °णेवस्था(E ° स्थ्या)दौ

स्नानीयेऽभिषवे **स्नानं** **योनिः** स्यात्तान्त्रिके पणे ।
स्त्रीणां गुह्ये कारणे च जन्मस्थानेऽपि कीर्तितः ।
**नाम** क्लीबे नामधेयेऽव्ययं स्यादवधारणे ।
स्यात्प्रकाशे प्रसिद्धे च क्रोधोपगमकुत्सने ।
**भानुर्**दिवाकरे रश्म्यां ग्रावाणेऽद्रौ पुमान्भवेत् ।
**पत्री** बाणे पक्षिभेदे वृक्षादौ वाह्युक्तके ।
**शिखी** वह्नौ मयूरे च ओषधौ पर्वते द्विजे ।
कुक्कुटध्वजयोश्चाथ **सादी** स्यात्सारथावपि ।
गजारोहे हयारोहे **वाजी** तुरगबाणयोः ।
विहङ्गेऽथ धृतौ बुद्धिस्वभावब्रह्मवर्ष्मसु ।
यत्ने जीवेन्द्रिये वायौ **चात्मा** स्यादथ भूपतौ ।
**राजा** चन्द्रे क्षत्रियेन्द्रे क्षयरोगे पतौ द्रुमे ।
**इनः** सूर्ये प्रभौ पुंसि **ब्रह्मा** वेदे द्विजेऽपि च ।
तत्त्वे तपसि योगेन्दौ सूर्ये ब्रह्माणि वेधसि ।
**वर्त्म** नेत्रच्छदे मार्गे **मीनो** राशौ झषेऽपि च ।
**पक्ष्मा**क्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणौ गुरौ ।
**पर्वस्तु** तिथिभेदे स्यादुत्सवे लक्षणान्तरे ।
दर्शप्रतिप्रदोः संधौ विषुवत्प्रभृतावपि ।
ग्रन्थिप्रस्तावयोश्चापि **वर्ष्म** देहप्रमाणयोः ।
**धाम** त्विषि प्रभावे च गृहे देहे च जन्मनि ।
**लक्ष्म** चिह्ने प्रधाने च **रत्नं** श्रेष्ठे मणावपि ।
स्वजाते पद्मरागादौ **वनं** काननवारिणो ।

---

952. D अभीषवे. C तान्द्रिके. A पण
954. Sl. no. C 460; D 461
955. B प्रसिद्धौ
956. Post. half corrupt. A ग्रामाणे
957. CE वाद्यु°
958. AC (orig as text) D ओषधे, B ओषधे. E वर्तते for पर्वते
961. E –वर्त्मसु
962. A यत्ते
965. B om. lines 965-6
967. D °लोह– (for लोम्नि). ABC तत्त्वाद्यशे. CE मणौ for ऽप्यणौ
968 पर्वा तु would be better
969 ACD सध्यौ
970 AD सधि– for ग्रन्थि–
971 C ग्रहे
972 Sl. no. CD 470
973. ACDE read post. half वने सलिलकानने also

हीनन्यूनावूनगर्ह्यौ ज्ञानी सर्वज्ञसौम्ययोः ।
दाम रज्जौ राक्षसे च कर्म सत्कृत्यपापयोः ।
जीवस्थानेऽथावसाने संयोगप्रतिलोमयोः ।
स्थाने गतौ चानुशब्दः पश्चात्सादृश्ययोरपि ।
पुनरप्रथमे भेदे नूनं तर्केऽर्थनिश्चये ।
अनः प्राणयुतेऽपि स्यान्नानानेकोभयार्थयोः ।

इति द्व्यक्षरनान्ताः ।

भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि ।
शयनं सुरते निद्राशय्ययोरपि बोधितम् ।
मदनः सिक्थके मारे दुर्धूरे शक्रपादपे ।
वसन्तशत्रुमूल्येषु कठिनो दुर्जने दृढे ।
जीवनं जीविते तोये संदानं दामदानयोः ।
लोचनं स्यान्मुकुलिते सुखिते शूषणे दृशि ।
यत्ने निरूपणेऽपि स्यान्मननं त्ववबोधने ।
कर्तनं छेदने प्राह नारीणां तूलसेवने ।
शकुनिः पक्षिभेदे च नरभेदेऽपि चेष्यते ।
अवनं खण्डने त्राणे गतौ तृप्तौ च याचने ।
श्रवणे च क्रियायां च अवाप्तिप्रीतिदीप्तिषु ।
तलिनं विरले स्तोके स्वच्छे तुच्छेऽपि वाच्यवत् ।
तलुनः पावने यूनि स्त्रियां तु तलुनीं विदुः ।
अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः ।
मातुरेकसुते वृक्षे धवले नयनामये ।
तृणभेदे गवि स्त्री स्यान्नयनं लोचने गतौ ।

975. D राजौ
977. E स्थानौ
979. ACD अन
982. B सीर्थके. D दारे A दुकूरे, B दुर्धरे, CE दत्तूरे, D दुकूरे for दुर्धूरे
984. B सतान
986. A यत्ते
987. AD कीर्तन–. Mss. कुल° for तूल°
989. A तृप्त तु (corrupt), C दृप्तौ च, D तृप्त तु
991. D transp. स्वच्छे and तुच्छे
992. B तलिनी. Sl. no. C 480
993 E ककुद
994. D °नामके
995. B ऋण° for तृण°

उमायां करतोये च कुट्टनायामपि स्त्रियाम् ।
**वितानो** यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि ।
वृत्तभेदेऽवसाने च त्रिषु स्यात्तुच्छमन्दयोः ।
प्रधाने पटले चाथ **मर्दनं** तु विलोलने ।
**मालिनी** तु नदीभेदे छन्दोभेदेऽपि च स्त्रियाम् ।
मालाकारस्त्रियां चापोनगर्यां गौरिगङ्गयोः ।
**प्रधानं** स्यान्महापात्रे प्रकृते परमात्मनि ।
सदोत्तमे प्रतिज्ञायामेकत्वे धारणे रणे ।
मुख्ये मतौ मन्त्रिणि स्याद्गन्धनं सूचने द्युतौ ।
उत्साहेऽपि च हिंसायां **मन्थनं** लोडनेऽपि च ।
**शासनं** राजदत्तोर्व्यां लेखाज्ञापत्रनीतिषु ।
शिक्षके रक्षके मर्यादाबुद्ध्योश्चान्यलिङ्गकः ।
**दर्शनं** नयने स्वप्नबुद्धिधर्मोपलब्धिषु ।
दर्शवर्मज्ञानशास्त्रदर्पणेष्वक्षिसंविदि ।
समये चाथ **पिशुनं** कुङ्कुमे सूचके खले ।
घ्राणे च स्यात्कटीवस्त्रे स्पृक्कायां **पिशुना** मता ।
**संतानः** संततौ गोत्रे स्यादपत्ये सुरद्रुमे ।
**चालनी** तु शतच्छिद्रे पुंश्चल्यामपि च स्त्रियाम् ।
**नलिनी** स्यात्सरोजिन्यां व्योम्नि सिन्धौ सरोवरे ।
नालिकायामपि स्त्री स्या**न्नलिनं** कमले जले ।
**पद्मिनी** स्त्रीविशेषे च सरस्यामम्बुजे स्त्रियाम् ।
**निधनं** सामभक्तौ च बहिर्मुष्टौ कुलक्षये ।
**जघनं** स्यात्कटेः पूर्वे श्रोणिभागापराधयोः ।
**विमानो**ऽस्त्री देवयाने सप्तभूमिकसद्मनि ।
**प्रार्थना** याचने नाम्नि चाथ मत्ताविदग्धयोः ।
**वाणिनी** दूतिकायां च नर्तक्यां **मानने**ऽस्त्रियाम् ।

999. BE विलोचने; D °डने
1002. AC प्रथान
1003. E सदोत्तरे
1005. A नोडने. E तथा for ऽपि च
1008. AD -विधि- for -बुद्धि-
1013. B शालनी
1014. AC °जन्यां for °जिन्या. CD सुरोवरे
1015. B नालिकायाम्
1016. B सरस्वाम्, C सरव्याम्
1021. A न तस्या, D lacuna for नर्तक्या
AD मनुनो; BC मानुनो for मानने

स्तम्भने मानभेदे संमाने मत्तनिकृन्तयोः ।
सीमन्तिन्यां मदस्यन्त्यां **मानना** **मानिनी** समा ।
**वन्दिनी** क्षेपणे नग्ने क्षुद्रे प्रेते दिगन्तरे ।
**भूतात्मा** धातरि तनौ **शिखरी** तरुशैलयोः ।
अपामार्गे **हायनस्तु** व्रीहिभेदेऽर्चिवर्षयोः ।
**वृजिनं** कल्मषे क्लीबं क्लेशे ना कुटिले त्रिषु ।
**वाहिनी** तु स्त्रियां नद्यां सेनायां कीर्तियुक्तके ।
**रजनी** नीलिकालाक्षाहरिद्रायामिनीषु च ।
**ह्रादिनी** वज्रतटितोः **कामिनी** योषिति स्त्रियाम् ।
श्यामापारावतीचक्रवाकीवन्दासु चेष्यते ।
**केतनं** तु गृहे कृत्ये ध्वजे चोपनिमन्त्रणे ।
**व्यञ्जनं** लाञ्छने श्मश्रुनिष्ठानावयवेष्वपि ।
कादिक्षान्तेऽथ राजानां द्यूतलोकापवादयोः ।
**कौलीनं** स्यात्कुलीनत्वगुह्यजन्यकुकर्मसु ।
कौलेयकविहगाहिपशूनां संगरेऽपि च ।
स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।
**देवनं** व्यवहारे च द्युतौ मोदे मदेऽपि च ।
स्तुतौ च विजिगीषायां क्रीडास्वप्रगतिष्वपि ।
**उत्थानं** पौरुषे तन्त्रे संनिविष्टोद्गमे मुदि ।
मलत्यागे समाप्तौ च **व्युत्थानं** वैरपूजयोः ।
समाधौ च निवृत्तौ च प्रतिरोधेऽथ मारणे ।
**साधनं** मृतसंस्कारे गतौ द्रव्येऽर्थदापने ।
निर्वर्तनोपकरणानुव्रज्यासु च मेहने ।
चिह्ने सैन्ये च करणे **व्यसनं** किल्बिषेऽशुभे ।
निष्परोद्यमने सक्तौ दोषे भ्रंशे विपद्यपि ।

---

1022. B विस्तंभने मानभेदे साने मर्तनि° (sic)
1023. E मनना मनिनी
1025. AD गतौ for तनौ
1027 B कलुषे for कल्मषे
1032. BC ग्रहे
1033. B लांछन-; C लांछन-. Sl. no. C 500
1035 E कुलिन
1036 DE -विहगादि-
1040. E मथान for उत्थानं. A मुदा; BCDE मुदे for मुदि
1044. AD निवृत्तनो°; C निर्वृत्तनो°; E निर्वृत्तयो°. AC -वृज्यासु

कामजे कोपजे चाथ **मैथुनं** संगतौ रतौ ।
**मिथुनं** राशिभेदे स्याद्युगं स्त्रीपुंसयोगयोः ।
**कौपीनं** चीरखण्डे स्याद्गुह्ये कार्ये तदिष्यते ।
**प्रसूनं** पुष्पफलयोः **प्रज्ञानं** बुद्धिचिह्नयोः ।
**क्रन्दने** रोदनाह्वाने **संस्थानं** तु चतुष्पथे ।
संनिवेशे च मृत्यौ स्यादाकृतौ केतनेऽपि च ।
**समानो** वायुभेदे च समे चैके च सज्जने ।
**तरस्वी** वेगिनि शूरे वृद्धौ छेदे च **वर्धनः** ।
**आसनं** तु गजस्कन्धे पीठेऽपि च नपुंसके ।

इति त्र्यक्षरनान्ताः ।

**वैरोचनस्तु** सुगते बलिकर्णयमेषु च ।
शनौ **विरोचनस्तु** स्यात्प्रह्लादतनयार्कयोः ।
अग्नौ चन्द्रे च कान्तौ स्यादथ नेत्रे **विलोचनः** ।
अन्धके विषये क्लीबे **अभिज्ञानं** स्मृतावपि ।
गर्वे ज्ञाने च हिंसायां प्रणवे च समीरितम् ।
**उपासनं** शराभ्यासे शुश्रूषायां च हिंसने ।
**अग्रजन्मा** द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतम् ।
**निबन्धनं** तु संसर्गे हेतौ संयमनेऽपि च ।
कौतुके चानुरागे च लक्ष्येऽ**भिज्ञान** उच्यते ।
**उपधानं** विशेषे स्याद्गड्डुके प्रणयेऽपि च ।
**रसायनं** विहङ्गे स्याद्व्याधीनां च कृतौषधे ।
**प्रतियत्नस्तु** संस्कारे चोपग्रहणलिप्सयोः ।
शक्रघातुकमत्तेभनीरदेषु **घनाघनः** ।
**निर्यातनं** वैरशुद्धौ दाने न्यासार्पणेऽपि च ।

---

1047. E कर्मजे for कामजे
1048. ABCD युभ for युगं
1049. D °दुच्यते for °दिष्यते
1053. C सर्जने
1054. CD वेगिनी metrical lengthening
1055. B नपुंसक
1060. B प्रणये for °वे
1061. AC °सना. A सिंहने for हिसने
1062. श्रेष्ठ° for ज्येष्ठ°
1064. AC लक्ष्ये, B ल*
1069. ACDE नासार्पणे

**संपिधानं** तु वस्त्रे चाच्छादनेऽपि प्रकीर्तितम् ।
**आराधनं** साधने स्यादवाप्तौ तोषणेऽपि च ।
**अधिष्ठानं** चक्रपुरप्रभावाध्यासनेष्वपि ।
**अभिपन्नो**ऽपराद्धेऽभिग्रस्ते व्यापद्गतावपि ।
**विश्वकर्मा** दिनकरे सुरशिल्पिनि पुंस्ययम् ।
**महासेनस्तु** सेनान्यां षण्मुखे वासवेऽपि च ।
**दुःशासनस्तु** दुर्दण्डे सुयोधनसुते पुमान् ।
**विकर्तनश्चो**द्वलने मार्ताण्डे नृपतावपि ।
**संकेतनं** लालने च संज्ञाध्वजगृहेषु च ।
**आतञ्चनं** प्रतीवापे जवनाध्यायनार्थयोः ।
**आलोचनं** दर्शने स्याद्यतिबुद्ध्या निरीक्षणे ।
**विष्वक्सेनो**ऽच्युतः पुंसि घृष्टिगन्धफलिन्ययोः ।

इति चतुरक्षरनान्ताः ।

इन्द्रे तु **गोत्रोद्दलनः** कुलघ्ने गिरिदारणे ।
लाक्षायां च हरिद्रायां फलिन्यां **वरवर्णिनी** ।
स्त्रीरत्ने रोचनेऽपि स्या**दुपस्पर्शन**मुच्यते ।
स्पर्शे स्नानाचमनयोश्छादने त्व**पवारणम्** ।

इति राघवीयनानार्थमञ्जर्यां तवर्गान्तवर्गाः परिसमाप्ताः ।

**पः** पुमान्पचने शैले प्रकाशे कौस्तुभे क्षणे ।
शुभलग्ने च **पं** क्लीबे हेम्नि **पाः** पातृपानयोः ।
स्यात्स्त्रियामम्बुधारायां सुधायां समितावपि ।
पुंस्त्रिष्वार्ते प्रपन्ने च **पूः** स्त्री पुरशरीरयोः ।

---

1070. BE संविधानं
1072. E च कर्पूर- for चक्रपुर-. AD -प्रभावध्या°
1075 AC महासनस्तु
1077 BC ° तैनोद्वेलने च, E °तैनेद्वलने च
1080 BCE यत्र for यति-. Mss. read wrongly after this line चतुरक्षरनान्ता'
1081. AB -गण्ड-. फलिन्ययो is a wrong form
1085. Col. D om. राघवीयनानार्थमञ्जर्यां, E om परिसमाप्ताः
1087. AD पत्र°, BCE पात्र° for पातृ°
1089. पु स्त्रीष्वा°

पूरणे चाथ **पुंशब्दः** पुरुषे परमात्मनि ।

इत्येकाक्षरपान्ताः ।

**रूपं** शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु ।
सौन्दर्ये च स्वभावे च मृगे स्थाने च नाविके ।
आकारवपुषोश्चाथ **गोपो** गोष्ठपतौ शिवे ।
ग्रामौघकृतर्कीटेषु(?) वल्लभाब्धीन्दुराजसु ।
**गोपी** गोपालमहिलाशारिबारक्षिकासु च ।
**कल्पः** स्यात्प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ ।
**क्षेपो** विलम्बे निन्दायां **बाष्पो** नेत्रजलोष्मणोः ।
**नीपः** कदम्बे निम्बायां पुलके च हरिप्रिये ।
अन्ववायप्रभेदे स्या**दपिः** प्रश्नविरोधयोः ।
संभावनायां गर्हायां समुच्चयवितर्कयोः ।
**तल्पं** शय्याट्टदारेषु **पापः** कुत्सेषदर्थयोः ।

इति द्व्यक्षरपान्ताः ।

**कलापो** भूषणे बर्हे तूणीरे संहतावपि ।
आच्छादनेऽन्ने **कशिपुरावापः** परिचिन्तने ।
वृक्षस्कन्धोर्ध्वशाखायां तृणगुच्छे द्रुविस्तृतौ ।
पल्लवे विटमुख्ये च **विटपः** पुंनपुंसकम् ।
**सुकृपा** मञ्जुबुधयो**र्यद्यपी**त्यवधारणे ।
**कच्छपी** कूर्मयोषायां वीणाभेदेऽपि च स्त्रियाम् ।

इति त्र्यक्षरपान्ताः ।

**अवलेपस्तु** गर्वे स्याल्लेपने दूषणेऽपि च ।

---

1091. B रूपः. B क्लीबे for श्लोके, A गथौ, BD ग्रथौ; C ग्रथौ, E ग्रथे for ग्रन्था-
1092. E मृग-
1094. Prior half corrupt
1097. D निद्रायां for निन्दायां
1099. D अन्ववाद-
1101 A तल्पः
1102 E (by metathesis) कपालो for कलापो BCE सहतेपि च
1104 A द्रविस्तृतौ, C द्रुविस्मृतौ, E द्युविस्मृतौ
1105. AD °पुसके
1108 AD लोपने

**वित्ताधिपः** कुबेरे स्यात्प्रभौ धनिकयक्षयोः ।
**परिवापः** परिच्छेदे पर्याप्तौ सलिलस्थितौ ।
**वृषाकपिः** शिवे विष्णौ जिष्णावञ्जलिनी पुमान् ।
**प्राप्तरूपाभिरूपौ** द्वौ विद्वांसे सुन्दरेऽपि च ।
**वंशदीपो** यष्टिदीपे **परिधापी** तु वत्सरे ।

इति चतुरक्षरपान्ताः ।

**स्फो** जञ्झानिल आस्फोटे फूत्कारे वारणेऽपि च ।
**फा** स्त्रियां निष्ठुरोक्तौ च कलाकेलीकुटीषु च ।
अथ स्फारे परोक्षे च **फः** शब्दो वाच्यलिङ्गकः ।

इत्येकाक्षरफान्ताः ।

**शिफा** तरुजटायां च शाखामांसीनदीषु च ।
**शफं** तरूणां मूले च गवादीनां खुरेऽपि च ।
**रेफः** शब्दे रवर्णे स्यादधमे क्षयकामयोः ।
**कफः** श्लेष्मे **कफी** तु स्यात्श्लेष्मलेऽपि पुमान्भवेत् ।

इति द्व्यक्षरफान्ताः । त्र्यक्षराद्यप्रसिद्धम् ।

**बः** कुम्भे वरुणे बिन्दौ विकले च गुरौ मदे ।
विभूतिकारे कलहे पक्षे गर्भे च पर्वणि ।
**बा** स्त्रियां काहलीवल्लीशृङ्खलास्वमले त्रिषु ।

इत्येकाक्षरबान्ताः ।

**निम्बस्तु** पिचुमन्दे च पारिभद्रतरावपि ।
**बिम्बोऽस्त्री** मण्डले सोमसूर्ययोर्मुखलक्ष्मणोः ।
प्रतिबिम्बे प्रतिकृतौ स्त्रियां स्याद्बिम्बिकाफले ।
**शम्बः** स्यान्मुसलाग्रस्थलोहमण्डलके पवौ ।
शुभान्विते शुभंयौ च **कम्बुर्वलयशङ्खयोः** ।

---

1114. A फंधृणे; B फट्टणे; C फड्डणे, D फण्ट्टणे; E फड्ढ्टणे for फूत्कारे
1117. A शा*मासि-, B शाखिमांस-; CDE शाखामासि-
1120. B शुष्मले, the rest शष्मले for श्लेष्मले. ACD भयं, E अयं for भवेत्. Col. AD °सिद्ध ; CE °सिद्धाः
1122 B गर्वे for गर्भे
1124. A transp. lines 1124 and 1125. BCE read l. 1124 after 1132 (wrongly). CE पारिभद्रे

क्लीबं नपुंसके षण्डे वाच्यलिङ्गमविक्रमे ।

इति द्व्यक्षरबान्ताः ।

**कादम्बः** कलहंसेक्ष्वोर्द्विजिह्वे मार्गणेऽपि च ।
**कदम्बः** पुंसि नीपे स्यात्तिनिशे वरुणद्रुमे ।
धूल्यां समूहे गन्धे च **विडम्बस्**त्यागनिन्दयोः ।
**नितम्बः** पश्चिमश्रोणीभागेऽद्रिकटकेऽपि च ।

इति त्र्यक्षरबान्ताः । चतुरक्षरमप्रसिद्धम् ।

**भः** शंभौ भ्रमरे भावे शुक्रेंऽशे जलदे पुमान् ।
**भा** भुव्यलंकृतौ दीप्तौ स्त्रियां **भाः** किरणे द्युतौ ।
**भं** क्लीबे गगने राशौ नक्षत्रे च सुदर्शने ।
**भीः** स्त्री भीत्यां खगे पुंसि स्थानभूम्योस्तु **भूः** स्त्रियाम् ।

इत्येकाक्षरभान्ताः ।

**जम्भो** दैत्यान्तरे दम्भे जम्बीरे भक्षणेऽपि च ।
**कुम्भः** स्यात्कुम्भकर्णस्य पुत्रे वेश्यापतौ घटे ।
गुग्गुलौ गजमूर्धांशे राशौ त्रिवृतमानयोः ।
**कुम्भी**भपाटलावारिपर्णीपिठरकट्फले ।
शिशुबालिशयो**र्डिम्भः स्तम्भ**स्तु स्थूणजाड्ययोः ।
निश्चेष्टालानकाष्ठेषु **शंभु**र्ब्रह्मेशविष्णुषु ।
**गर्भो**ऽपवरकेऽन्तःस्थे सुते नभ्रे च कन्दरे ।
कुक्षौ कुक्षिस्थजन्तौ च भ्रूणे पनसकण्टके ।
**सुम्भो** दैत्ये बालके च **नाभिः** प्राण्यङ्गजे पुमान् ।
क्षत्रिये मध्यकोष्ठे च शुक्रास्तचक्रवर्तिनोः ।
क्षेत्रे प्रधाने चक्रस्य मध्ये कस्तूरिकामदे ।
**सभा** संसदि सभ्येन्दीवरसामाजिकेष्वपि ।
द्यूते दुरोवरे कान्तियुक्ते त्रिष्वपि विश्रुतम् ।

---

1131. B तिमिशे, CE तिनीशे, D तिनिमिशे
1132. After l 1132, BCE read l. 1124
1133. ABE दिक्कटके
1137. A om. l. 1137 with foll. col.
1140. E त्रपुत- for त्रिवृत-
1141. Prior half is corrupt in E. C -पीठर-, D -पाठर- for -पिठर-
1144 E प्रवरके
1147. B शुक्रास्थश्; C शुक्रास्तश् for ° स्त-
1148. D कस्तू*का मता
1150. AC कातियत्ते

**कदल्यप्सरसो** **रम्भा** **शोभा** स्त्री कान्तिरागयोः ।

इति द्व्यक्षरभान्ताः ।

**कौस्तुभः** स्याद्देवमणौ कण्ठावर्तेऽपि वाजिनाम् ।
आलम्भमवसाने च **कलभः** करिपोतके ।
अङ्गलेपनवस्तूनां विशेषेऽपि पुमान्भवेत् ।
**सुरभिश्चम्पके** स्वर्णे जातीफलवसन्तयोः ।
गन्धोपले कामधेनौ सल्लकीमातृभेदयोः ।
सुगन्धे च मनोज्ञे च विद्वांसे घ्राणतर्पणे ।
**विष्कम्भो** योगभेदे स्यात्**संरम्भः** संभ्रमे क्रुधि ।
**ककुभस्त्विन्द्रवृक्षे** स्याद्दिक्षु पक्षिण्यपि द्वयोः ।
**आरम्भस्तु** त्वरायां च दर्पे चोद्यमने वधे ।
**शरभः** शलभे चाष्टपादे वनमृगान्तरे ।
**वल्लभो** दयितेऽध्यक्षे पतौ सर्वकलावति ।
अतिप्रीतेऽतिसौन्दर्ये कुलीनेऽश्वे मनोहरे ।
प्रधानेऽल्पे च वीरेऽथ प्रणये चापि हिंसने ।
**विस्रम्भः** केकि( लि? )कलहे विश्वासे च प्रकीर्तितः ।
**दुन्दुभिर्दैत्यभेदे** च वाद्ये वर्षे त्रिकद्वये ।
**कुसुम्भं** सोमनि क्लीबे स्यान्महारजने घटे ।
**संनिभं** तु समीपे च पुंसि वा साम्यवस्तुनि ।

इति त्र्यक्षरभान्ताः ।

**अवष्टम्भः** सुवर्णे च स्तम्भप्रारम्भयोरपि ।

इति चतुरक्षरभान्ताः ।

---

1151. BCE °रोगयोः
1152. BCE कर्णावर्ते
1153. B आरंभम् CD कळभः
1155. E स्वर्गे for स्वर्णे
1156. AC सल्यकी-. E -मात्र- for -मातृ-
1157. E विदुषि (on marg. *sec. m.*)
1158 E om. from क्रुधि up to the end of line 1165
1159. E om l. 1159 C स्यादिक्षु
1167 CE सोमनी; D सोमिनी. BD °रजते
1168. E °मस्तुनि
1169. B स्यात् for च. D स्तंभरांगयोरपि

**मः** शंभौ धातरीन्द्रे च चन्द्रे मासे च पुंस्ययम् ।
**मा** स्त्री माने मृतौ वेलामेघापद्मासु च स्त्रियाम् ।
अव्ययं प्रतिषेधे च जने तु स्यान्नपुंसकम् ।
**मुः** पुंसि बन्धनेऽपि स्यात्पिङ्गलाभिधवर्णयोः ।

इत्येकाक्षरमान्ताः ।

**दमस्तु** दमथे दण्डे कर्दमे दमनेऽपि च ।
**क्रमः** शक्तौ परीपाट्यां रीत्यां चलनकम्पयोः ।
ग्रन्थे च पादक्षेपे च पर्याये च पराक्रमे ।
**क्षेमं** स्यान्मङ्गले लब्धे **क्षेमः** कुशलचोरयोः ।
**क्षेमा** द(ध)नहरीगौर्योः **क्षमः** पुंसि क्षमान्विते ।
**क्षमा** धरित्रीक्षान्त्योः स्त्री युक्ते शक्ते हिते सहे ।
युक्तादौ वाच्यलिङ्गः स्यात्**कामः** काम्ये मनोभवे ।
इच्छायां रेतसि क्लीबे निकामे व्यसनेऽव्ययम् ।
रागाभ्यनुज्ञयोश्चापि त्रिषु **श्यामस्तु** मेचके ।
हरित्प्रयागान्यग्रोधघटवृद्धेषु दारके ।
मारे शुके पिके कृष्णे मरीचे लवणे नपुम् ।
अप्रसूताङ्गनायां स्त्री सोमवल्ल्यां महौषधौ ।
कृष्णाप्रियङ्ग्वोर्गुन्द्रायां निशाशारिबयोरपि ।
नील्यां शोभात्रिवृतयोस्तृणभेदेऽपि कथ्यते ।
**भामः** क्रोधे रवौ दीप्तौ नरकग्रहभेदयोः ।
**धर्मः** पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ ।

---

1172–3. = var. *NR*. 1 176
1173. E मः for मुः
1174. A (wrongly) मदस्तु. E दमने for °थे. Mss. read मदने for दमने
1176. E गृध्द्रे for ग्रन्थे
1177. ACE लक्ष्मे; D लक्ष्म for क्षेमः
1178. B दनुहरी. Mss. (wrongly) क्षेमः for क्षमः
1179. B सखे for सहे
1180. E °लिंगस्य for °लिङ्गः स्यात्. E कांय for कामः
1182. BCE चाथ for चापि
1184 E शुक्रे for शुके
1185 A महौषधं
1186. B °प्रियगौ, CE °प्रियंगो. AD चंद्राया, E यत्रायां. Mss निशिरा (E ° शि शा)-रिबयोर्
1188 Mss (except D) भौमः for भाम ; cf notes
1189. E धमे for यमे, (य and ध are often being confused in Grantha Script)

उपमायामहिंसायां भावे चापे च यज्वनि ।
स्वरेषूपनिषद्राज्ञोर्वामं सव्येऽतिसुन्दरे ।
प्रतीपे द्रविणे पुंसि वामस्थे रम्यचक्रयोः ।
गर्हिते योषिति हरे वामी तु बडबासृजोः ।
रासभीकरभीभृङ्गेष्वथ सोमो धनाधिपे ।
दिव्यौषधौ श्यामलताचन्द्रयोर्वासरे जले ।
वसुभेदे च कर्पूरे समे स्त्री योषितीति च (?) ।
स्यात्पद्मा लाञ्छनेऽभिख्याविध्योर्लोकेश्वरार्कयोः ।
धनदे च सरस्वत्यां तारालक्ष्म्योश्च वाच्यवत् ।
पद्मं स्यात्पद्मकव्यूहे निधौ संख्यान्तरेऽम्बुजे ।
ऊर्मिस्तरङ्गे पीडायां वेगे भङ्गप्रकाशयोः ।
उत्कण्ठवस्त्रसंकोचरेखेषु परिचक्ष्यते ।
लक्ष्मीः संपत्कान्तिरमारूपभेदप्रियङ्गुषु ।
रामो मनोज्ञे शरभे जामदग्नौ( ग्न्ये?) बले सिते ।
त्रिषु नीले राघवे च परशौ रमणेऽपि च ।
क्लीबे तु वास्तौ कुष्ठे स्त्री स्याद्रमायां च योषिति ।
शुष्मा तेजोर्कयोः पुंसि शुष्मं क्षीरे नभस्यपि ।
पद्मके बिन्दुजाले च पद्मा भार्ङ्गीश्रियोरपि ।
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कान्ताख्ये शिल्पयन्त्रके ।
भीमो भये भीमसेने सूक्ष्ममध्यात्मदभ्रयोः ।
श्रमोऽभ्यास उपाये च सूर्मिः स्यात्सालभञ्जिके ।
यमः कृतान्ते यमने युग्मजाते हिते त्रिषु ।
आनृशंस्यक्षमासत्याहिंसार्जवदमेषु च ।
ज्ञानप्रसादमाधुर्यमार्दवे पुंनपुंसकम् ।

---

1190. CE भवे for भावे
1191. BCE स्वरे सूपनिषद्राज्ञोर् (E °द्राज्ञे)
1193 B °वास्त्रयो
1194. B रसभी–, E (by metathesis) सारभी AD–श्रृंगेषु AD सोसो for °मो
1195 Post half corrupt
1197. D पद्म. BC–विंध्योर् ; E–विंध्यो
1201. E °चक्षते
1205 B बास्तौ, D वास्तु
1207 CE ऽपि for च. A भागी, BD भागी, C भागु–, E भंगी for भार्ङ्गी–
1211. B युग्मे for युग्म–
1212. D अनृशंस्य–

**आमो**ऽपक्के रोगभेदे **समस्त**क्राटकार्थयोः (?) ।
**यामो** दिनस्याष्टमांशे श्वाङ्क्षे संयमनेऽपि च ।
**घर्मः** स्यादातपे ग्रीष्मे प्रवर्ग्ये देवतान्तरे ।
किरणे प्रग्रहे **रश्मिर्ग्रामः** शब्दादिवृन्दयोः ।
षड्जादौ स्यात्संवसथे चाथ सेनामुखे रुजि ।
स्तम्बेऽपि गहने **गुल्म ऊष्म** स्वेदाम्भसोरपि ।
**धाम** कान्त्यामथालस्ये **जामी** स्वसृकुलस्त्रियोः ।
**जिह्मस्तु** कुटिले मन्दे रसनायां तु तत्स्त्रियाम् ।
न पुंसि कपटे वक्रे **सिंहः** श्रेष्ठमृगेन्द्रयोः ।
**अमा** सह समीपे च **सामि** त्वर्धे जुगुप्सने ।
**नाम** प्रकाश्यसंभाव्यक्रोधोपगमकुत्सने ।

इति द्व्यक्षरमान्ताः ।

**ललाम** च **ललामं** च भूषाप्राधान्यवाजिषु ।
चिह्नप्रभावपुण्ड्रेषु पुच्छे कान्तौ त्रिषु ध्वजे ।
शृङ्गे च पुरुषश्रेष्ठे **मध्यमस्तु** त्रिलिङ्गके ।
मध्यदेशे स्वरे रात्रौ छन्दोभेदेऽन्तरे नले ।
अङ्गुलौ कर्णिकायां च तथा दृष्टरजःस्त्रियाम् ।
**सत्तम**श्चान्यवत्पूज्ये श्रेष्ठसाधीयसोरपि ।
**नियमो** यन्त्रणायां च प्रतिज्ञायां च संयमे ।
शौचाध्वरतपःसत्यस्वाध्यायेषु व्रतेऽपि च ।
उपस्थनिग्रहे स्नाने पुंसि मौनोपवासयोः ।
**कुट्टिमं** बद्धभूमौ स्याद्वि**भ्रमो** भ्रान्तिशोभयोः ।

---

1214. E क्रमो for आमो The post. half corrupt. BE तक्राढकार्थ(E ° श्व)योः prior half
1217. D ग्रामाः; E ग्राम-
1218. E सु- for स-
1220. ACDE धामा
1222. A कवटे (व and प indistinguishable in Grantha). D कः पटे C वज्रे for वक्रे, E नपुंसके पटे वज्रे for
1223. C सामी त्वर्थे; E सामीप्यर्थे
1225 E ललामश्च for °म च
1226. B छिन्न- for चिह्न-
1227. CE पुरुषे for °ष-
1228 नले is not traceable
1229. A कण्ठिकायां

संशये भयसौन्दर्यविलासेषु प्रकीर्तितः ।
**निगमो**ऽस्त्री पुरे वेदे वाणिज्ये च वणिग्धने ।
**नैगमो** नागरे वैश्ये पुंसि स्याच्छ्रौतकर्मणि ।
**परमः** स्यात्प्रधानाद्योरोंकारेऽपि पुरातने ।
अनुज्ञाने च **कुसुमं** नेत्ररोगे फले सुमे ।
स्त्रीणां रजस्यथो तल्पे ता(च)न्द्रभासे वितानके ।
कुट्टिमे **तलिम** प्रोक्तं **सुषमा** परमद्युतौ ।
**सुषीमः** शिशिरे चारौ सुषिरे पन्नगान्तरे ।
**सुषमं** चारुसमयो**रजिह्मः** सत्कृतावृजौ ।
**व्यायामो** मानभेदे स्याद्दीर्घव्यापारयोः कृतौ ।
**आगमः** शास्त्रभेदे स्यात्कल्पागमनयोरपि ।
**अधमः** कुत्सिते न्यूने अधःस्थध्मानयोरपि ।
**विक्रमः** स्याद्वर्षभेदे चाक्रान्तौ च पराक्रमे ।
पूर्वे तिथौ च **प्रथमः सुकर्म** पुण्ययोगयोः ।

इति त्र्यक्षरमान्ताः ।

**परिणाम**स्तु संतोषे वायिके नमनेऽपि च ।
**सार्वभौमो** दिग्गजे च चक्रवर्तिनिशीशयोः ।
**प्लवंगमः** कपौ भेके शौर्योद्योगौ **पराक्रमौ** ।
**उपक्रम**श्चिकित्सायां प्रारम्भे विक्रमेऽपि च ।
उपायपूर्वोपधासु वत्सरेऽपि **इहैषमः** ।
जीर्णे च परिभुक्ते च **यातयामं** प्रकीर्तितम् ।
अथ **प्रियङ्गुश्यामा** स्यात्त्रियामसुरयोषिति ।

इति चतुरक्षरमान्ताः ।

इति राघवीयनानार्थमञ्जर्यां पवर्गान्तवर्गाः परिसमाप्ताः ।

---

1236. A खेदे (व and ख are indistinguishable) E -जने for -धने

1240. E तंदिभासे, चन्द्रहासे in *NR*. 1 1804

1241. CD तल्मि. Mss. सुषुमा

1242. Mss. सुषुम. for सुषीमः

1243. ACE सुषुमं. AD °तावृतौ, B °तौ रजौ; C °तौ ऋतौ, E °तौ रतौ for °तावृजौ

1246. A अधस्ताध्मान°; B अधस्थध्मान°; D अधस्थाध्मान°

1247. E वषट्- for वर्ष-

1248. ACD सुकर्म

यस्त्यागे निलये वायौ यामे दातरि यातरि ।
या स्त्रियां यानमञ्जर्योः शोभालक्ष्म्योश्च निर्मितौ ।
त्रिषु स्यात्सर्वनामाख्ये व्यये हेतावथो स्त्रियाम् ।
ख्या ख्यातौ च प्रकथने ज्या मौर्वीमातृभूमिषु ।
द्यौर्ना दिव्यह्नि वह्नौ च स्वर्व्योम्नोः पुंसि च स्त्रियाम् ।

इत्येकाक्षरयान्ताः ।

संध्या तु कालभेदे स्याद्व्यवहारात्मनोरपि ।
काव्यासुरस्त्रियां स्त्री· स्यात्पुंसि रामायणादिषु ।
स्मयो बले प्रवत्से च दर्पशौण्डीर्ययोरपि ।
मृत्युः किंपाकमरणलक्षणेषु यमेऽपि च ।
नयो नीत्यां षट्पवर्णे(?) वेध्यं लक्ष्येऽपि कीर्तितम् ।
चित्यं चैत्यं चिताकम्ब्वोरुद्देशे द्वौ सुरालये ।
संख्या युद्धे हस्तिबिन्द्वोर्निधिव्यूहान्तरादिषु ।
गणनायां वयो यूनि कथ्योद्गमकथार्हयोः ।
कक्ष्या वैकक्ष्यके काञ्च्यां रज्जौ मध्येभबन्धने ।
हर्म्यादेश्च प्रकोष्ठे च स्त्रियां बृहतिकच्छयोः ।
वरत्रायां शयस्तु स्याच्छयालौ सुखहस्तयोः ।
भुजंगमेऽपि शय्यायां दायो वित्ते च यौतके ।
भाषणे सोल्लुण्ठने च विभक्तव्यापितुर्धने ।
जनितव्ये रणे क्लीबेऽपवादजनजल्पयोः ।
अस्त्री वरवधूज्ञातिप्रियतुल्यहितेषु च ।
जन्यस्त्रिषु जने साधौ जनितोत्पादनीययोः ।
जन्या तु मातृसख्यां च मदे हट्टे जनेऽपि च ।

---

1257 = var. *NR*. 1.131.
1258. Mss. अयो (E अयो) for अथो, cf notes
1259-60 are omited in A
1260 BC दिव्यग्नि
1263 E दध- for दर्प-
1265. Prior half corrupt Mss. नित्य for नीत्या, B षट्पवक्रे, D षट्प*र्णे, E ष*वर्णे
1266. E सुरातले
1271. D वरुत्राया; E वारित्राया. ABD सुखि- for सुख-
1274 A °जनकल्पयोः, D °मनकाल्पयोः
1275. B om. ll 1275-6. Mss. पर- for वर-
1277. B मुदे for मदे

लोके जन्तावथो **वीर्यं** प्रभावे शुक्रतेजसोः ।
सामर्थ्येऽपि च **गुह्यं** तु योनौ रहसिदम्भयोः ।
कूर्मे, शैलान्तरारोग्यसोढव्येषु नपुंसकम् ।
पुंसि स्यादङ्गभेदे च कुमार्गेऽस्वैरिपक्षयोः ।
स्त्रियां तु शाखानगरे छेकरूषितयोरपि ।
**सत्यं** तु शपथे तथ्ये साधुसप्तमलोकयोः ।
**चोद्यं** तु चोदनार्हे स्यादद्भुतेऽपि च तत्त्रिषु ।
**पद्यः** शूद्रे पुंनपुंसि सृतौ श्लोकेऽपि गद्यते ।
**भव्यं** सत्ये शुभेऽरोगे कर्मरङ्गतरौ स्त्रियाम् ।
शुद्धे करिकणायां च भेद्यवद्योग्यभाविनोः ।
**छाया** स्त्री सूर्यभार्यायां प्रतिबिम्बे अनातपे ।
पालनोत्कोचयोः कान्तिसच्छोभाकाव्यपङ्क्तिषु ।
**मध्यस्तु** मध्यभागेऽल्पेऽवलग्नोपरिदेशयोः ।
न्याय्येऽपि **प्रायस्तुल्ये** च बाहौ मृत्यौ क्षये मृते ।
वयस्यनशने भूम्नि **पण्यं** विक्रयवस्तुनि ।
अट्टे च व्यभिचारे च **पुण्यं** धर्ममनोज्ञयोः ।
**कृत्या** क्रियादेवतयोः कुटिले कीर्त्यते त्रिषु ।
सामन्ते परसेनायाः पतौ चापि पुमानयम् ।
**शल्यं** शङ्कौ शरे वंशे योग्याभ्यासार्कयोरपि ।
**अयि** प्रश्नानुनययोश्चैत्यमायतने पुमान् ।
उद्यानपादपे बिम्बे बुध्न्ये **चार्यस्तु** बाहुजे ।
**मुख्यं** भूपालान्त्यमण्योरयः पुंसि गतावपि ।
शुभावहे चाभ्युदये **तार्क्ष्यश्च** गरुडाश्वयोः ।

---

1278 A कोके, D corrupt for लोके
1280. Mss. –साधव्येषु for –सोढ°
1281. Mss. स्वर– for अस्वैरि–
1284. Mss. बोध° for चोद°
1285. Mss (except B) स्तुतौ for सृतौ
1286. CDE सत्त्वे for सत्ये. E भवे for शुभे B अपि for स्त्रियाम्
1287. Mss योङ्ग– for योग्य–
1288. ABCD °बिंब अनातपे, a wrong saṁdhi
1289. B °भक्तिषु for °पङ्क्तिषु
1291. ABD न्याये. B चाबहौ. B ऽपि च for मृते
1292 AD पुण्य for पण्य
1294 AD कीर्तिते
1296. Mss, योगा° for योग्या°
1300. CE तु for (the second) च

**रथे**ऽनूरावश्वकर्णे पुंसि स्यान्न रसाञ्जने ।
**क्षयो** रोगे गतौ हिंसागृहह्रानिषु कथ्यते ।
**तिष्यः** पुष्ये कलियुगे दीप्त्यामलकयोः स्त्रियाम् ।
**पूज्यस्तु** श्वशुरे मान्ये **मन्युर्**दैन्ये क्रतौ क्रुधि ।
**द्रव्यं** भव्ये त्रिषु द्युम्ने क्लीबे जतुनि भेषजे ।
गुणाश्रयेऽपि **धिष्ण्यं** तु शक्तौ भे निलयेऽनले ।
यज्ञे होत्रादिपुरतः स्थिते स्यात्पुंनपुंसकम् ।
**क्रिया** कर्मणि चेष्टायां चिकित्सायां च निष्कृतौ ।
आरम्भोपायशिक्षासु पूजनेऽपि च पुंसि वा ।
संप्रधारणसंस्काररचनासु स्त्रियामपि ।
धात्वर्थाख्यातयो**र्भाग्यं** शुभे चाशुभकर्मणोः ।
**कल्यो** निरामये सज्ये दक्षे साधौ कलासु च ।
प्रभातेऽपि नपुंसि स्या**दथ्र्यस्तु** विबुधेऽपि च ।
आत्मवाननपेतार्थशिलाजतुषु पुंस्ययम् ।
**रूप्यः** प्रशस्ते रूपेऽपि रजते तन्नपुंसकम् ।
**सौम्यं** तु सुन्दरे सोमदैवते पुंसि वा बुधे ।
**दस्युः** स्यात्तस्करे पुंसि द्वेषणेऽपि प्रकीर्तितम् ।

इति द्व्यक्षरयान्ताः ।

**कुलायः** परगेहे स्या**त्कुलायो** महिषेऽपि च ।
**कौर्णेयो** राक्षसे वायावीशानानलयोरपि ।
तपःस्थिते फाल्गुनिके पुंस्येवाप्यु**च्छ्रयो** नगे ।
उच्छ्रायेऽपि **जघन्यस्तु** सुरभे नीचकर्मणि ।

---

1301. Mss. प्रसा(E °सं)जने
1302. CDE –ग्रह– for –गृह–
1303. ACDE दीप्ता°
1306. ABC शौक्तौ, D शौक्ति for शक्तौ
1307. E यज्ञ– for यज्ञे
1310 Mss. °सारण– for °धारण–
1311. Post half °कर्मणो is wrong
1312. Mss. कल्या for कल्यो E कायौ for साधौ
1313. E प्रभावे. ACD अर्थ्यस्तु; B आढ्यस्तु; E अर्धस्तु for अथ्र्यस्तु
1314. ABC अनुपेता°
1315. CE रूप्य
1316. BE °दैवते
1319. Cf notes. A काणेयो, D कौणेयो
1320 AD °वाप्रच्छ्रयो; BCE °वापृच्छयो. Mss. नये for नगे
1321. B उच्छ्रयेपि

अधमेऽन्त्ये च लिङ्गे च पुंनपुंसकयोरपि ।
**कषायो** मधुरे स्निग्धे तिक्तेऽपि सुरभिण्यपि ।
अङ्गरागे च निर्यासे लोहिते च विलेपने ।
रञ्जकाश्मकशक्वाथविप्लवेषु च रूषिते ।
आश्चर्यहाहागन्धर्वनिगर्वेष्वपि **विस्मयः** ।
**अनयो** व्यसने दैवे चाशुभे चापदि स्मृतः ।
**अत्ययो**ऽतिक्रमे कृच्छ्रे दोषे दण्डविनाशयोः ।
**अभिख्या** कीर्तिमाहात्म्यनामशोभास्वपि स्त्रियाम् ।
**प्रलयो** मृत्युकल्पान्तमूर्छालेषु प्रशस्यते ।
**विषयः** स्यादिन्द्रियार्थे देशे जनपदेऽपि च ।
गोचरे च प्रबन्धादेर्यस्य ज्ञातस्य तस्य च ।
**प्रत्ययः** शपथे रन्ध्रे विश्वासाचारहेतुषु ।
प्रथितत्वे च संनादावधीने ज्ञानशब्दयोः ।
**गाङ्गेयः** षण्मुखे भीष्मे जातरूपकशेरुणोः ।
मुस्तायां पुंनपुंसि स्यान्**मङ्गल्य**स्तु मसूरके ।
बिल्वेऽश्वत्थे त्रायमाणे दधिकल्याणयोरपि ।
मनोज्ञे रोचनायां च प्रियङ्गुशतपुष्पयोः ।
अधःपुष्पे शङ्खपुष्पे शमीशुक्लवचासु च ।
**हृदयं** जीविते वित्ते भावे मनसि वक्षसि ।
पुत्रे मातरि **सौभाग्यं** सौन्दर्ये शोभनेऽपि च ।
संपत्तिज्ञानमाहात्म्यपुण्यमुक्तिषु कथ्यते ।
**शरव्यं** सायके लक्ष्ये मृगयासाधनेऽन्यवत् ।
**प्रणयः** स्यात्परिचये याच्ञायां सौहृदेऽपि च ।
**निष्क्रिया** बुद्धिसामर्थ्ये उन्मूले निर्गतेऽपि च ।
**भुजिष्यः** किंकरेऽपि स्याच्छ्**वशुर्यौ** स्यालदेवरौ ।
**पर्जन्यौ** रसदब्देन्द्रौ **भ्रातृव्यौ** भ्रातृजद्विषौ ।
स्या**दर्यः** स्वामिवणिजोः **पर्यायो**ऽवसरे क्रमे ।

---

1323. AD मधुरो
1326. AD आश्चर्यं
1327. BCE चाशुगे
1336. A मुक्ताया for मुस्ताया
1340. CE वृत्ते for वित्ते
1343. E om line 1343
1347. AD मातृज for भ्रा°.
1348. Cf. notes

निर्वाणे च प्रकारे च **समयो** नियमे पुमान् ।
शपथाचारसिद्धान्तकालसंवित्सु पुंस्ययम् ।
संकेतेऽवसरे चाथ समवाये च **संनयः** ।
पश्चादवस्थायिबले **संस्त्यायः** संनिवेशने ।
संघातेऽवयवेऽपि स्याद्विशल्या तु महौषधे ।
त्रिपुटालाङ्गलीदन्तीगतशल्यामृतासु च ।
**वक्तव्यो** वचनीयेऽपि गर्ह्येऽधीने नपुंसकम् ।
वार्तिके चावदानी तु वाचि वल्ग्ववलग्नयोः ।

इति त्र्यक्षरयान्ताः ।

**सां(सं)परायः** स्मृतो युद्धे विपदुत्तरकालयोः ।
भयेऽप्य**नुशयो** द्वेषे पश्चात्तापानुबन्धयोः ।
**पौरुषेयो** विकारे स्यात्पुरुषस्य पदान्तरे ।
पुंसां समूहवधयोः पुरुषेण कृतेऽपि च ।
**व्यवसायः** कारणे च व्यापारे कृषिकर्मणि ।
**स्थूलोच्चय**स्त्वसाकल्ये नागानां मध्यमे गते ।
गन्धशीले **चानुशयो** दीर्घद्वेषानुतापयोः ।
**समवायः** समूहे स्यादथोर्ध्वश्रयणेऽपि च ।
उन्नत्यां च विरोधे च स्यात्**प्रतिश्रय** आस्पदे ।
साधारणे चाश्रयणे सभायां च प्रकीर्तितः ।
**करतोयः** सदानीरे नदीभेदेऽपि कथ्यते ।
**अवश्यायो** हिमे गर्वे **बहुधान्यो**ऽब्दपट्टणयोः ।

इति चतुरक्षरयान्ताः ।

**वृषाकपायी** श्रीगौर्योरिन्द्राणीवह्निभार्ययोः ।

इति पञ्चाक्षरयान्ताः ।

**रः** पुमान्पावके कामे क्षये वज्रे शयेऽप्यरौ ।
**रा** स्त्रियां हेम्नि शालायामाशंसायां गतावपि ।
**रं** क्लीबे रुधिरे मूर्ध्नि ध्याने व्योमाण्डकुक्षिषु ।

---

1350. AB °संवत्सु
1353. B महौषधौ
1354. Mss. read त्रपुटा for त्रि°, cf. *MED.* 120. 107
1356 Corrupt
1364. A °श्रवणेपि च; E °अवणेष्वपि for °श्रयणेऽपि च
1372. AC रा for रं. CD ध्यान-. B व्योमाक्षि-

त्रिषु स्याद्वक्त्रभययोर्विरसे त्यागतीक्ष्णयोः ।
रास्तु द्वयोर्ध्वनौ स्वर्णे रिशब्दस्तु स्रवे क्षये ।
स्त्री रुग्ज्वालेच्छयोः कान्तौ रुर्ना युद्धे भये ध्वनौ ।
स्त्री कामिनीवम्रिकयोर्द्रुः स्वर्णे पादपेऽपि च ।
श्रीर्वेषरचनावृक्षभासंपत्सरघासु च ।
वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽप्ययं त्रिषु ।
जटायां पूरणे स्रुक्स्त्री होमाङ्गे च गतौ स्त्रियाम् ।
धूः स्याद्यानमुखे भारे कम्पने च तदिष्यते ।
दर्शनज्ञाननेत्रेषु दृक् स्त्री द्रष्टरि तु त्रिषु ।

इत्येकाक्षररान्ताः ।

वारः समूहेऽवसरे सूर्यादिदिवसे क्रमे ।
संभागे वरणे शीघ्रे हरे कूपकवृक्षके ।
मद्यपात्रे कुन्तले च द्वारे करिणि पुंस्ययम् ।
आवृत्तौ क्ली वारिघट्टे जलवारणवृन्दयोः ।
गजबन्धिनि वारी स्यान्मारौ मन्मथशात्रवौ ।
पत्रं तु वाहने पक्षे पर्णे स्याच्छरपक्षिणोः ।
पट्टे च तिलके पुंसि पात्रं भाजनयोग्ययोः ।
नाटकादिप्रवेशेर्हावध्वा(?) स्त्री राजमन्त्रिणि ।
पर्णे स्रुवादौ विभवे न पुं तीरद्वयान्तरे ।
वित्तनिक्षिप्तपात्रे स्याच्चित्रमालेख्य अद्भुते ।
मङ्गले तिलके हेम्नि व्योम्नि पद्मे नपुंसकम् ।

---

1373. AD वक्तृ-; C वक्र- for वक्त्र-. D -पयसोर् for -भययोर् E विशये for विरसे
1374. CE ध्वने; D धने for ध्वनौ
1376. B वज्रिक°, D पत्रिक°; E वर्णिक° for वम्रिक°
1377. E भासंवत्सरवाक्षु च for post. half
1378. A वाणी*न्मील*ङ्गेषु for prior half
1379. A *स्त्री; BE स्रक्स्त्री, CE स्रक्स्त्री for स्रुक्स्त्री
1381. Col. BE °रेफान्ता for °रान्ताः
1382 B (orig ) वदने, and (after corr.) वदरे
1383 D साभागे, E सभोगे for सभागे, ACD कूपक°
1384 A चारे for द्वारे. B किरिणि for क°
1385 B स्त्री for क्ली
1386 ABD °बधनि
1390. B °चमा° for °द्वया°
1392. E हेति for हेम्नि

स्त्री त्वाखुपर्णीगोदुग्धासुभद्रादन्तिकासु च ।
नक्षत्राप्सरसर्पेषु पुंसि स्याद्वह्निसंज्ञके ।
कर्बुरे च रिपौ वृत्ते घने ध्वान्ते च दानवे ।
शैले चक्रे सुपर्णे च **चारः** स्यात्पिप्पलिद्रुमे ।
गतौ सर्पे च मन्थाने प्रियालस्पर्श(श ?)योरपि ।
नपुंस्युपाये रन्ध्रे च **तारस्**तरलशुद्धयोः ।
मुक्ताहारे नेत्रमध्ये नक्षत्रे शुद्धमौक्तिके ।
गुरुसुग्रीवभार्यायां बुद्धयोषित्यपि स्त्रियाम् ।
पाते च शेखरे स्वर्णे पलानामयुतद्वये ।
विविधे पुंनपुंसि स्यात्प्रणवे रजतेऽपि च ।
उच्चस्वरेऽप्यनवचि **मित्रः** स्नेहितसूर्ययोः ।
**शूरः** पराक्रमे सूर्ये **वीरः** शूरे रतिप्रिये ।
कविसामर्थ्ययोर्धीरश्चक्रं सैन्यरथाङ्गयोः ।
जलावर्ते च संसारे व्याजे यन्त्रान्तरेऽपि च ।
छद्मन्यस्त्रान्तरे संघे चक्रवाके पुमानयम् ।
तैलिकीये कौम्भकारे ग्रामजाले च राष्ट्रके ।
संग्रामे कुम्भकारस्य भाण्डे स्यात्साधनान्तरे ।
**चक्री** तु पद्मनाभे च कुलाले चक्रवर्तिनि ।
**परः** स्यादुत्तमानाप्तवैरिदूरेषु केवले ।
पुंनपुंस्यव्ययेऽपि स्यात्परमात्मन्यनात्मनि ।
**पुरं** तु नगरे गेहे देहे पुंसि तु गुग्गुलौ ।
**पुराव्ययं** पूर्वकाले पुरस्तात्पाटलीसुते ।
प्रबन्धेऽपि चिरातीते निकटागामिकेऽपि च ।
**बभ्रुर्**विशाले नकुले कृशानौ यादवेऽपि च ।
शूलिन्यब्जे पिङ्गले च यथावत्कथितो बुधैः ।

---

1394. AC °संघेषु for °सर्पेषु. E °संज्ञिके
1396. ACD पपालिद्रुमे
1397. E सघे for सर्पे E–प्रियालु for प्रियाल–
1401. AD शेवने, E शेवरे for शेखरे
1404. ACE पराक्रमौ
1406. E om. from व्याजे up to कौम्भकारे (in line 1410)
1407 E om. l. 1407
1408. E om. the prior half. ACD तैलिकीयें A कासि° for कौम्भ°
1414 CE पुरव्यय, D पुरं व्यय
1417. ACD **वत्; E वत्सरे for यथावत्

चन्द्रः शशाङ्के कर्पूरकम्पिल्लस्वर्णवारिषु ।
रम्ये शुभकरे क्लीबे दरोऽस्त्री भयरन्ध्रयोः ।
शङ्के चाल्पिङ्गमल्पार्थे **मात्रा** कर्णादिभूषणे ।
औषधेऽवधृते कार्त्स्न्येऽक्षरावयववृत्तयोः ।
परिच्छेदे च मानेऽल्पे प्रत्ययेंऽशेऽवधारणे ।
**वरोऽ**भीष्टे देवतादेः श्रेष्ठे जामातृषिद्गयोः ।
अथ काश्मीरजे वृत्ते वोढरीषत्प्रिये त्रिषु ।
त्रिफलायां शतावर्यां स्त्रीलिङ्गे स्याद्वरावरी ।
**शरं** दध्नि जले पुंसि बाणे शैलेऽम्बरे खगे ।
दन्ते तेजनके मूले काशे कमठवंशयोः ।
कार्पासे चास्त्रशस्त्राश्रुशोणितेषु प्रकीर्तितम् ।
**नेत्रं** पथि गुणे वस्त्रे तरुमूले विलोचने ।
नद्यां रथे मत्कुणे च वल्के नाव्यन्तरेऽपि च ।
त्रिषु स्यान्नेतरि **क्षेत्रं** शरीरे पुरगेहयोः ।
केदारयोनिभार्यासु सिद्धस्थानेऽपि चेष्यते ।
**कारो** वेधे निश्चये च बले यत्ने पतावपि ।
तुषाराद्रेः स्त्रियां दूत्यां बन्धने बन्धनालये ।
प्रसेवके कालिकायां हेतावथ **करः** पुमान् ।
नभांशुहस्तकरणोपधाघनशिलासु च ।
राजदेयेभशुण्डायां कर्तर्यथ कुलेऽचले ।
**गोत्रं** नाम्नि वने मार्गे चित्रे चोरे भुवि स्त्रियाम् ।
संभावनीये गोवृन्दे बले त्रातरि च त्रिषु ।
**सारं** वरेण्ये वानीरे धने च क्वचिदिष्यते ।
**द्वारं** पुरान्निर्गमनेऽप्युपाये रन्ध्रमुच्यते ।

---

1418. AB –कपिल– for –कम्पिल्ल–
1422. B om. lines 1422–3
1423. C षिट्ङ्गयोः; D षिङ्गयो.
1424. D व्रजे for वृत्ते
1425. Mss. शरावर्यां. ADE वरावती, B वरासने for वरावरी
1428. E °शोषितेषु for °शोणि°
1430. AD मङ्कुणे for मत्कुणे B वल्कनाप्यंतरेपि च for post. half
1434. E om. the post half of this line and prior half of the next
1435. D प्रस्वेके कालिकाया च for prior half
1436 D नपाशु°
1438 AD पोत्र for गो°
1440. AD सारा वेरण्ये, B सार वेरण्य–; CE सारं वेरण्या–
1441. ABCD चारं for द्वारं. AD °नेभ्युपाय

गौरः पीतेऽरुणे श्वेते विरुद्धे मृगमोदयोः ।
आधिक्येऽपि नपुं पद्मकेसरे सितसर्षपे ।
स्त्रियां शशिनि गौरी तु नागकन्योमयोर्मता ।
रोचनीरचनीपिङ्गीप्रियङ्गुवसुधासु च ।
नदीभेदे च वरुणयोषित्यथ मखे वने ।
आच्छादने सदादाने दम्भे सद्रक्षके त्रिषु ।
सादने च क्वचित्पात्रे संदेये सत्रमव्ययम् ।
गृहे पशौ च तन्त्रं तु करणे च परिच्छदे ।
तन्तुवाये प्रधाने च शास्त्रसिद्धान्तयोरपि ।
तथाष्टीसायकोपाये श्रुतिशाखान्तरेऽपि च ।
कुडुम्बार्थे च कर्तव्यतायां मुख्ये घटोत्तमे ।
सिरायाममृतायां च तन्त्री वीणागुणे तनौ ।
शुक्रः काव्येऽनले ज्येष्ठे केतौ शुभ्राक्षिरोगयोः ।
क्लीबं क्षेत्रे महेन्द्रे च कुटजेऽर्जुनभूरुहे ।
भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे ।
वृषे पुंसि तिथौ रुद्रे वाच्यवच्छ्रेष्ठसाधुनोः ।
गजभेदे नृभेदे च मन्दाकिन्यां स्त्रियामपि ।
कट्फलानन्तकृष्णासु रास्नायामथ कथ्यते ।
क्षुद्रस्त्रिष्वधमे क्रूरे स्वल्पे कृपणवर्णयोः ।
व्यङ्गावेश्यानटीकण्टकारिकासरघासु च ।
स्त्रियां, पुंसि दरिद्रे स्यात्क्षुद्रकर्मणि चेष्यते ।
क्षौद्रं मधुनि पानीये चेन्द्रः शतमखार्कयोः ।
योधेऽन्तरात्मनि पतौ श्रेष्ठेऽपि स्यात्फणिज्जके ।
स्वरुर्वज्रे यूपखण्डे यज्ञपात्रे शिलीमुखे ।

---

1443. पद्मे for पद्म–
1444. CDE °कन्यामयोर्
1446. ACDE मघे for मखे
1447. ACD सद्दक्षके, B साद्दक्षके B पुमान् for त्रिषु
1448. B संद्देये for सदेये
1449. BC ग्रहे for गृहे. ABCE तन्त्रं for °न्त्र
1451. B तथाष्टि°
1457. E °साधयोः for °साधुनोः
1458. E गध –for गज–
1459 ABD खट् for कट् –. BE अपि for अथ
1461. E कठाकारिका
1463 B क्षुद्र for क्षौ°
1464. AC फणिज्यके; DE °जंके for °ज्जके
1465. B transp. यूपखण्डे and यज्ञपात्रे

निषादादावुदात्तादावकारादावपि स्वरः ।
गुरुर्बृहस्पतौ पितृमात्रादौ दुर्भरेऽधिके ।
निषेकादिकृतिस्थूले त्रिषु मात्राद्वयेऽपि च ।
हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ।
सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च ।
स्वर्णे मणौ च कपिले त्रिष्वथ प्राज्यहोमयोः ।
विधिदामोदरेशेषु भूरिश्चन्द्रेन्द्रयोरपि ।
धात्री जनन्यामलकीवसुमत्युपमातृषु ।
वप्रः प्रासादतट्योः साले सानौ विदारणे ।
रन्ध्रं छिद्रे निम्नगेऽवकाशे समयदोषयोः ।
पार्श्वेऽथ कन्दलीतुलस्यो रिन्ध्रः(?) स्याद्भरो धरे ।
भारे लाभे दुर्भरे च रागभेदे रणेऽपि च ।
वज्रं तु कुलिशे शस्त्रेऽप्यशनौ रचनान्तरे ।
मणिभेदे सूचिभेदे योगे चामलके स्त्रियाम् ।
वज्रवल्ल्यां गळूच्यां स्यात्सुरः सूर्येऽमरे पुमान् ।
सुरा देवस्त्रियां मद्ये शारिः पर्याणपक्षिणोः ।
क्लीबे द्यूतगुणेऽपि स्यादग्रमालम्बनेऽधिके ।
पुरोपरिप्रान्ताद्येषु न पुंसि प्रमिताशने ।
मरुर्निर्जलदेशेऽद्रावद्रिः शैलेऽर्कवृक्षयोः ।
वृत्रस्तु दानवे शत्रौ ध्वान्ते चक्रघने गिरौ ।
अस्रस्तु कुन्तले कोणे रक्ते नेत्राम्बुनि स्मृतः ।
शारो वायौ नरी (?) पुंसि कर्बुरे वाच्यलिङ्गकः ।
मन्त्रो वेदे गुप्तवादे देवादीन्साधनेऽपि च ।
बभ्रुर्हिरण्यगर्भेऽग्नौ विपुले नकुलेऽपि च ।
पिङ्गले त्रिषु विष्णौ चाथो सारस्तु वरे त्रिषु ।

1468. A om. from the post. half of line 1468 up to prior half of line 1471
1469. E वार्तोक– for वातार्क–
1475. D रंध्रश्छिद्रे निम्नपक्षारेवासमय°
1478. AD रशनांतरे
1480. AD गळीच्यां; B गळच्यां; E गुळूची
1481. CE शैरिः for शारिः
1486. B आस्रस्तु कुंतले घोणे for prior half
1488. cf. notes
1489–90. cf. notes

क्लीबे न्याये बले पुंसि स्थिरांशेऽपि तथा भवेत् ।
**यात्रा** स्याद्यापने याने देवतादिमहोत्सवे ।
**इरा** भूवाक्सुराप्सु स्यात्स्त्रियामप्सरयोषिति ।
**तन्द्री** निद्राप्रमीले च **तन्द्रा**पि च समार्थके ।
**मात्रा** परिच्छदेऽल्पे च परिमाणे च पुंसि वा ।
कार्त्स्न्येऽवधारणे क्लीबे स्त्रियां स्याद्भूषणे घने ।
वर्णवृत्तांशयोश्चापि **खरो** बालेयवर्षयोः ।
निदेशग्रन्थयोः **शास्त्रं शस्त्र**मायुधलोहयोः ।
मुखाग्रे क्रोडहलयोः **पोत्रं क्षीरं** पयोम्बुनोः ।
**राष्ट्रो**ऽस्त्री विषये चोपद्रवे **व्यग्र**स्तु नाकुले ।
अव्यासक्ते च देशे च **क्रूरौ** कठिननिर्दयौ ।
मन्दस्वच्छन्दयोः **स्वैरः शुभ्र**मुद्दीप्तशुक्लयोः ।
**धारा** संपातपुरयोर्**नरो**ऽजे मानवेऽर्जुने ।
**तिरो**ऽन्तर्धौ तिर्यगर्थे **ऊरी** विस्तारसंमतौ ।

इति द्व्यक्षररेफान्ताः ।

**शृङ्गारः** सुन्दरे नाट्ये रसेऽपि गजमण्डने ।
नपुंसि चूर्णसिन्दूरलवङ्गकुसुमेषु च ।
**गान्धारः** स्वरभेदे स्यान्न स्त्री देशे रतान्तरे ।
**मुर्मुर**स्तु तुषाग्नौ च **किशोर**स्तुरगेऽर्भके ।
**कुटीरं** क्षुद्रभेदे स्याच्च**त्वरं** तु चतुष्पथे ।
शीघ्रे च **शम्बरो** दैत्यभेदे क्लीबे जले पुमान् ।
**विष्फारो** धनुषः स्वाने प्रभूते जृम्भितेऽपि च ।
**विधुर**स्त्वरितेऽधीरे कष्टविश्लेषयोरपि ।
नागरे कौरवामात्ये विवशे विकलेऽन्यवत् ।

---

1492. E धात्रा.
1496. E om. स्यात्
1497. E बाले च वर्णयोः
1500. AB चोपद्रव्ये
1502. B स्वैरं, E स्वेषु for स्वैरः
1505. CE सुरते for सुन्दरे
1510. E दैत्ये for दैत्य-
1511. C विस्फारो

अपत्नीके. **सुन्दरी** तु पल्लवे विद्रुमस्त्रियोः ।
**सिन्दूरं** तु शिलाभेदे नागसंभववृक्षयोः ।
**केसरो**ऽस्त्री स्कन्धरोम्णि किञ्जल्के वकुले तु ना ।
पुंनागे च नपुंसि स्यान्नागकेसरहिङ्गुनोः।
**कर्परस्तु** कपाले स्याच्छस्त्रे घटकपालके ।
**कान्तारो** दुर्गमे मार्गे दुर्भिक्षे पातके वने ।
**संस्तरः** प्रस्तरे यज्ञे **बर्बरः** पामरे पुमान् ।
कुन्तलानां च विन्यासनीवृदन्तरयोरपि ।
स्त्रियां तु कञ्जिकायां च पुष्पदेवेन्द्रयोरपि ।
**बन्धुरं** मङ्गले रम्ये नम्रे हंसे तु पुंसि तत् ।
बन्धूके च विहङ्गे च बन्धुरापण्ययोरपि ।
**दर्दुरस्तो**यदे भेके वाद्यभाण्डाद्रिभेदयोः ।
**करीरः** कलशे वृक्षभेदे वंशाङ्कुरेऽपि च ।
**करीरू**श्चीरिकायां च दन्तमूले च दन्तिनाम् ।
**करीरं** कोणमध्यस्थपुलिने दर्दुरे तटे ।
**शर्करा** खण्डविकृतावुपलाकर्परांशयोः ।
शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च ।
**कावेरी** स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः ।
**गाङ्गेरी** बृहतीहिंसामक्षिकामातृकेषु च ।
**पिञ्जरं** कनके राजभेदे पीते च पुंसि तत् ।
**शिखरं** शैलवृक्षाग्रे रक्षापुलककोटिषु ।
पक्वदाडिमबीजाभमाणिक्यकलशेषु च ।
पुंलिङ्गे तु शिवाभेदे खट्वाङ्गे द्वारपालके ।

---

1514. A अपत्तीरे for °त्नीके E विदिम° for विद्रुम°
1516. ACDE स्कन्ध(A before corr. °न्ध)रोणी. E न for ना
1518 E कर्पूरस्तु. ABCD शास्त्रे; E छत्रे for शस्त्रे
1520. E सतरः for संस्तरः
1521. A कुतलान्या
1523. A om. lines 1523-4. E नाम्रे for नम्रे
1525. ACDE °भाण्डादि° B °भेकयोः
1527. CE करीरुश्
1530. E शर्पराशीतदेशे च for prior half
1531 A पड- for पण्य-
1535 A माणक्य-, BE माणिक्य-
1536. B शिखा- for शिवा-. B पालकेपि च for द्वारपालके

**ईश्वरो** दैवते चाढ्ये शंभौ स्वामिनि मन्मथे ।
समर्थेऽब्देश्वरीच्छायां पार्वत्या**मीश्वरा** मता ।
**तमिस्रं** तिमिरे रोगे **तमिस्रा** तामसीनिशि ।
**कुमारो** बालके स्कन्दे पुत्रे नामनि वाच्यवत् ।
**नमेरुः** सुरपुंनागे **सुमेरुः** कनकाचले ।
**आधार** आलवालेऽम्बुबन्धे च किरणेऽपि च ।
स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु **चान्तरम्** ।
परिधानेऽवधौ मध्येऽन्तरात्मनि नपुंसके ।
विनावसरबाह्येषु **चाम्बरं** व्योम्नि वाससि ।
सुगन्धिनि च कार्पासे **गोपुरं** द्वारमात्रके ।
पुस्तके च पुरद्वारे पुरे सौधेन्द्रियेऽपि च ।
**शारीरः** क्षोभकरणे शुके शकुनिकान्तरे ।
युद्धार्थे गजपर्याणे व्यवहारे च वाच्यवत् ।
**आसारः** स्यात्प्रहरणे वेगे वृष्टौ सुहृद्बले ।
प्रवेशे च प्रसारे च **कुञ्जरः** कुन्तले पुमान् ।
मस्तके भूषणे नागे **पुष्करो** द्वीपसर्पयोः ।
तीर्थे खड्गफले तोयकरिहस्ताग्रयोरपि ।
वाद्यभाण्डमुखे पद्मे व्योम्नि मार्गे तिथावपि ।
**विहारो** भ्रमणे स्पन्दे लीलायां सुरतालये ।
**रुधिरो**ऽङ्गारके छागे कुङ्कुमे शोणिते पुमान् ।
**प्रकारो** भेदसादृश्यकृतिष्वस्त्रीङ्गितेऽपि च ।
**द्वापरो** युगभेदे स्यात्संशयेऽपि पुमान्भवेत् ।
**किंशारु**र्धान्यशूकेषुकङ्कपक्षिषु कथ्यते ।
**प्रदरो** भङ्गनारीरुग्बाणभीदारणेषु च ।
दीर्णे स्वयं चावटे स्या**त्तूबर**स्तु प्रचक्षते ।

---

1537. CE ईश्वरे
1539. E रागे (probably more correct)
1543. AD स्थानात्मन्याय° for °त्मीयान्य°. A चांतरे, E चांतरा
1545. E विनावसन°
1548. E शारिरं
1549. AD °हारेण for °हारे च
1552. ABCD पुष्करद्वापि°
1557. ACD °श्यकृतिषुं; B °श्याकृतीषु
1560 E भग- for भङ्ग-
1561. Mss. स्वये ! B तूपरस्तु; CE तूबरस्तु

अजातशृङ्गेऽप्यश्मश्रौ **संगरस्तु** विषापदोः ।
शमीफले क्रियाकारे प्रतिज्ञासंविदाजिषु ।
**विष्टरो** विटपौ दर्भमुष्टौ पीठाद्य आसने ।
**मत्सरो**ऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।
क्रोधे च मक्षिकायां च **कलत्रं** श्रोणिभार्ययोः ।
नृपतिप्रभृतीनां तु दुर्गस्थानेऽपि च स्मृतम् ।
**अजिरं** विषये काये चाङ्गणेऽपि तदिष्यते ।
**अक्षरं** स्याद्ब्रह्मणि च वर्णे मोक्षेऽप्यनाशने ।
**गह्वरं** तु गुहादम्भनिकुञ्जगहनेष्वपि ।
**औशीरं** चामरे दण्डे चासने शयने भवेत् ।
**पिठरो** मन्थदण्डे स्यात्स्थाल्यां स्त्री मुस्तहिंस्रयोः ।
**नागरः** सुरते संज्ञा चान्तर्जाते नपुंसकम् ।
राजीवकन्दे चर्या(?) प्रवीणाकुत्सितयोर्विना ।
**शार्वरं** त्वन्धतमसि घातुके भेद्यलिङ्गकम् ।
शबरे कुञ्जरे वाच्यलिङ्गः स्याद्धिंसनेऽपि च ।
कुक्षौ तु **जठरो** न स्त्री त्रिषु वृद्धकठोरयोः ।
**अधरस्तु** निकृष्टोष्ठायादेशेष्वपि(?) वाच्यवत् ।
**एकाग्रमेकताने**ऽनाकुले **चोत्तरमुच्यते** ।
उपर्युदीच्यश्रेष्ठेषु प्रतिवाक्येऽप्यपुङ्के ( ? )
विराटतनये ऋक्षे स्त्रियां पुंसि च शस्यते ।
**मधुरस्तु** प्रिये स्वादौ रसभेदे पुरे स्त्रियाम् ।
**उदारो** दातृमहतोरितरस्त्वन्यनीचयोः ।
**उररी चोररी** द्वे च विस्तारेऽङ्गीकृतेऽपि च ।
**विकारि** ( री ? ) वर्षेऽङ्गहीने **शार्वरी** रात्रिवर्षयोः ।
**कबरी** केशपाशे च हिङ्गुपत्रेऽपि च द्वयोः ।

इति त्र्यक्षररेफान्ताः ।

---

1562. E शक्रस्तु for सग°
1565. AD °शुभे for °शुभ°
1566. E °भोग्ययोः for °भार्ययो.
1572. E पीडरो. B मस्त–
1575. ADE खातुके for घा°
1578. All Mss. read आदरस्तु for अधरस्तु. Post. half corrupt
1579. B °मुख्ययो· for °मुच्यते
1581. A लक्षे; B जर्क्षे, CE जक्षे for ऋक्षे

अर्धचन्द्रस्तदाकारे बाणे बर्हे शिखण्डिनः ।
शतपत्रं पक्षिभेदे दारुघाते कुशेशये ।
घनसारस्तु कर्पूरे महामेघे च चन्दने ।
अलंकारः शास्त्रभेदे मण्डनेऽथ जवे पुमान् ।
उच्छ्राये चातिमात्रः स्यान्मद्गुरौ तु भयंकरः ।
भये सहचरी तु स्यादनुचारे सहाशने ।
तुलाधरस्तु वणिजि श्लक्ष्णराशौ दिवाकरे ।
संप्रहारो हते युद्धेऽश्वतरः सुरवाजिनोः ।
कुलाङ्कुरो मूलदेशे चोरे करवटेऽपि च ।
धार्तराष्ट्रो हंसभेदे दुर्योधनकुलेऽपि च ।
गिरिसारं तु लोहेऽपि लक्ष्मीपुत्रस्तु मन्मथे ।
धनाढ्येऽश्वे परिकरः पर्यङ्कपरिवारयोः ।
प्रगाढे गात्रिकाबन्धे व्राते चारम्भसंज्ञयोः ।
हस्तसूत्रे प्रतिसरो माल्यमन्त्रविशेषयोः ।
विभूषणे सैन्यपृष्ठे प्राणशुद्धौ च कङ्कणे ।
पयोधरः स्तने मेघे नाळिकेरे च सागरे ।
इक्षुभेदे कशेरौ च धेनौ च परिचक्ष्यते ।
अवस्करस्तु विष्ठायां गुह्ये चाडम्बरोऽस्त्रियाम् ।
तूर्यशब्दे च संरम्भे गजेन्द्राणां च गर्जिते ।
अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ।
स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ।
द्वारि द्वाःस्थे प्रतीहारः प्रतिहार्यप्यनन्तरे ।
राजस्त्रीणामलंकारः कृतायामपि च स्त्रियाम् ।
दुरोदरो द्यूतकारे पणे द्यूते नपुंसि वा ।

---

1584. C चैव for द्वे च
1590. E जये for जवे
1593. CDE श्लक्ष्णि for श्लक्ष्ण-
1595. CDE करपटे
1597. CE गिरसार, others गिरासारं
1598. AC धनाध्येश्वे, D वनाध्येश्वे; E धनाध्यश्वे for °ढ्येऽश्वे
1599. AC प्रगाढ्ये for °ढे
1603. E °चक्षते
1604. B अवस्कदस्तु
1605 CE सारंभे. E गर्जने for गर्जिते
1606 CE °योगो न for °योगे च
1607 B खड्गे for खड्ग-
1608 AD परीहारः. D प्रतीहार्य°
1609. E °कारकृतायाम्
1610. B द्यूतकरे

अरुष्करो घातुके च व्रणकार्येऽप्यनुत्तरः ।
नोदीच्यां नोपरि श्रेष्ठे चोपह्वरमुदाहृतम् ।
हायने सर्वधारी स्याद्रुधिरोद्गारि वत्सरे ।

इति चतुरक्षररेफान्ताः ।

लः खण्डने त्रिष्वाधाने स्त्री नेन्द्रे लवणे तु लम् ।

इत्येकाक्षरलान्ताः ।

हली कृषीवले पुंसि कृष्णस्यैवाग्रजन्मनि ।
पलं स्यान्मत्सरे मांसे मल्लो मल्लकशक्तयोः ।
स्थली खनित्रे कुद्दाले क्षेत्रभेदे नपुंस्यपि ।
खलो नीचे दुर्जने च कुलटायामपि स्त्रियाम् ।
हर्षितेऽव्यक्तमधुरे रवे स्याद्वाच्यलिङ्गकः ।
कला शिल्पे कालभेदे चन्द्रांशे शकलेऽपि च ।
वित्तवृद्धौ च मूले च सुषुमाविद्ययोस्तथा ।
तत्तदागमसिद्धासु गुरुणि स्त्रीरजस्यपि ।
कलं शुक्रे वाच्यलिङ्गमव्यक्तमधुरे ध्वनौ ।
कामशास्त्रे च संगीते मन्त्रशास्त्रेऽपि च स्त्रियाम् ।
कलिः स्यात्कलहे शूरे देशेऽप्यन्तयुगे पुमान् ।
पापे च कैतवे शोके कालस्तु यमकृष्णयोः ।
महाकालेऽपि समये मृत्युमाञ्जिष्ठयोः पुनः ।
काली गौर्यां क्षीरकीटे नील्यां त्रियाति(?)च स्त्रियाम् ।
तलं क्लीबे तालतरौ पेटे ज्याघातवारणे ।
खड्गमुष्टौ वितस्तौ च स्वरूपेऽधरपृष्ठयोः ।
तालः कालक्रियामाने करास्फोटद्रुमेदयोः ।
वाद्यभाण्डेऽपि कांस्ये च तालं तु हरितालके ।

---

1616. ABCD छलं for पलं
1618. B ना for च
1621. E वृत्त° for वित्त°
1625. B अंत्ययुगे
1627. B पुमान् for पुनः
1629 CD ताळतरौ. AC पटे; E पेठे for पेटे
1630 AD विस्तरे for वितस्तौ
1632. CE कांसस्य for कांस्ये च

बलं गन्धे रसे धूपे स्वामिनि स्थौल्यसैन्ययोः ।
शक्त्याभिमानयोः क्लीबे पुंसि तु स्याद्धलायुधे ।
बलिस्तु दैत्यभेदे च बलवत्काकयोः पुमान् ।
अस्त्री चामरदण्डे च त्वक्कोचे गृहदारुणि ।
नैवेद्ये गन्धके पाणौ वली चापि प्रकीर्तितः ।
वात्यालके बला तूका वलं चोन्मादमानयोः ।
बालो मूर्खेऽर्भके व्यालग्राहावश्वेभपुच्छयोः ।
ह्रीबेरकेशयोर्बाला योषिद्भूषात्रुटीषु च ।
शुक्लः शुभ्रे रेतसि च रोगभेदे च वत्सरे ।
कुलं वर्गे समूहे च देहे गोत्रे गुणेऽपि च ।
सजातीये जनपदे मन्दिरे च नपुंसकम् ।
मूलं तु रोगे नक्षत्रे शिफायामन्तिकाद्ययोः ।
स्वीये वशीकृते चाथ जालमानायवृन्दयोः ।
गवाक्षे क्षारके दम्भे कोशातक्यां स्त्रियां भवेत् ।
वेला काले जलनिधेस्तीरनीरविकारयोः ।
अक्लिष्टमरणे रागे सीम्नि वारिबुधस्त्रियोः ।
मर्यादायां चाथ फलं फले मांसे धनेऽपि च ।
भोगे लाभे च निष्पत्तौ बीजबाणाग्रयोरपि ।
सस्ये हेतुकृते जातिफले च फलकेऽपि च ।
कर्कोले त्रिफलावार्क्षु मुक्ताधान्यकणेषु च ।
मुष्टौ कर्षचतुष्के स्यात्पलं चापि प्रयोजने ।
लीला तु विभ्रमे हेतौ क्रियायां भाविलासयोः ।
कीलो धूर्ते रथाक्षे च शङ्कौ ज्वालामहीध्रयोः ।
स्त्रियां कपोणिनिर्घाते प्रहारे रतिसंभवे ।
पुलः स्यात्पुलके चापि विशाले महतीष्यते ।

---

1633. B –रूपयोः for –सैन्ययोः
1636. B ग्रहदारिणि
1638. ABD बले for बला
1641. AD रागभेदे
1644. B °का द्वयो.; E °कात्ययोः for °काद्ययोः
1646 B बुदे for दम्भे
1647. BCDE तीरे for तीर–
1648. E वार– for वारि–
1653 D फलं for पलं
1655. Om. in A. B ज्वाल– for ज्वाला–

खिलमप्रहते शून्ये उत्तप्तौ केवले त्रिषु ।
मौलिः किरीटे चूडायामशोके संयते कचे ।
पीलुर्गजे शरे पुष्पे परमाणुद्रुमेद्वयोः ।
व्यालः पुंसि शठे सर्पे श्वापदे दुष्टकुञ्जरे ।
मलोऽस्त्री पापविट्किट्टकृपणेषु त्रिषूच्यते ।
वसायामपि शूलं तु ध्वजे योगान्तरे रुजि ।
आयुधे विक्रये वध्याशङ्कौ गर्भेऽपि योषिताम् ।
आलिः पङ्क्तौ वयस्ये स्याद्भृङ्गे पालिस्तु पुंसि वा ।
अंशभेदे च पङ्क्तौ च संजातश्मश्रुयोषिति ।
अस्रे च कर्णतालाग्रे यूके प्रस्थे च कथ्यते ।
शील स्वभावे सद्वृत्ते चेलं वस्त्रेऽधमे त्रिषु ।
जिषि (?) स्त्रियामथ स्थूलं पीवरे च जडेऽपि च ।
एला सूक्ष्मे त्रुटौ स्त्री स्याल्लोलश्चलसतृष्णयोः ।
भल्लो भल्लूकशरयोर्वार्तासंभाव्ययोः किल ।
अलं भूषणपर्याप्तिशक्तिवारणवाचके ।
निषेधवाक्यालंकारे जिज्ञासानुनये खलु ।

इति ह्यक्षरलान्ताः ।

कुण्डलं वलये पाशे क्लीबे कर्णविभूषणे ।
गळूच्यां स्त्री काञ्चनाद्रौ सर्पे पुंसि तु कुण्डली ।
मण्डलं वर्तुले राष्ट्रे कुष्टे द्वादशराजके ।
देवतायतने बिम्बे स्थले वृन्दे पुमाञ्शुनि ।
मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः ।
मुञ्जरज्जौ शाड्वलस्तु पुंसि कर्दमदेशयोः ।

---

1658. E खलम् for खिलम्
1659. BE सयतः for °ते
1663. CE वासायाम् for वसा°. E शचि for रुजि
1665, Cf. notes
1667. A आस्ये, B अस्रे, D आस्रे for अस्रे. A यूकप्रस्थे
1668 BE सद्वृत्तौ. E यमे for ऽधमे; य and ध being often confused
1670 E लोकश्चालसतृष्णयोः for post. half
1673 ABCD °ल्कारजि°
1678. ABD काचिशैल°
1679 CE मज for मुञ्ज–. E °भेदयो. for °देशयो.

अचलः पर्वते वृक्षे कीलावसुधयोः स्त्रियाम् ।
**चञ्चलः** कामुके वायौ लक्ष्म्यां तटिति च स्त्रियाम् ।
**जाङ्गलं** मांसामिलिते स्त्रियां स्याच्छारदीजले ।
**शृङ्खला** त्रिषु संदर्भविशेषे निगलेऽपि च ।
**गोपालः** पशुपाले स्याद्वैकुण्ठे च जितेन्द्रिये ।
**सृगालो** दैत्यभेदे च क्षुद्रशत्रौ च जम्बुके ।
न्यूने हीने च **विकलो** दुष्टे च ननियन्त्रके ।
**नकुलः** पाण्डुतनये सर्पभुक्कुलहीनयोः ।
**उत्तालो** भीषणे मत्ते **विलालो** विकटस्थले ।
**लाङ्गली** नालिकेरे च जामदग्नौ च पुंस्ययम् ।
**लाङ्गूलं** वानरे पुच्छे फल्गुन्यां **लवली** स्त्रियाम् ।
**अनलं** राशि नाले च पुंस्यग्न्यौषधिभेदयोः ।
**दुकूलं** सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके ।
**उपलः** प्रस्तरे रत्ने चाश्मरूपमृदि स्त्रियाम् ।
ऐक्षवे **चपलः** शीघ्रे दुर्नीतावस्थिते रसे ।
स्त्रियां विद्युति **चाभीलः** कृच्छ्रे भीतेऽथ **वातुलः** ।
वातासहेऽपि वात्यायां पुंस्युन्मत्तेऽपि च त्रिषु ।
**कमलं** सलिले ताम्रे जलजे क्लोम्नि भेषजे ।
कुरङ्गभेदे **कमलः** स्त्रियां तु श्रीवरस्त्रियोः ।
**कम्बलो** नागराजे च सास्नायां मृगरोमजे ।
गजप्रावरणे चैव **निष्कला** विगतार्तवा ।
कलाहीने **चावलिस्तु** रेखायामपि कथ्यते ।
**बहुलो** वह्न्यसितयोः कृत्तिकायां गवि स्त्रियाम् ।
बलायां कृष्णपक्षे च **कीलालं** शोणितेऽम्भसि ।

---

1686. E –नियंतृके
1689. A गांगली, D गंगली for लाङ्गली
1691. A पुंसि ग्नौ°, B पुंस्यश्यो°, DE पुस्यग्नौ°, all corrupt
1694. E ऐश्वरे for ऐक्षवे A दुर्नितावस्थिते; B दुर्नीतेपास्तिते, CE दुर्नीतोवास्थिते
1695. B तथातुला, E ऽथ वालुकः for ऽथ वातुलः
1697 BCE कलिले for सालिले
1698 A करग , B कुरकु– for कुरङ्ग. DE स्त्री– for श्री–
1699. B नागरागे for °राजे C स्त्रीमृगजे; E मृगसेमजे for मृगरो°

पटलं नेत्ररोगे च परिच्छेदसमूहयोः ।
तिलके पुंनपुंसि स्याच्छदिः स्त्री पटलीति च ।
पातालं वडवाग्नौ स्याद्बलिसद्मनि चेष्यते ।
कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।
निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।
पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ।
भारवाहे प्रवालं तु वीणादण्डे च विद्रुमे ।
अङ्कुरे स्यात्किसलये करालो दन्तुरे पुमान् ।
तुङ्गेऽथ पेशलो दक्षे चारौ च मुसले हरे ।
मृदुले कोकिले प्रोक्त अनिलस्तु प्रभञ्जने ।
विमलो निर्मले शुभ्रे हिन्तालः पादपान्तरे ।
उन्नते उत्थितेऽपि स्यादुत्तालः परिकीर्तितः ।
शाण्डिल्यो मुनिभेदे च शिल्पे च परिकीर्तितः ।

इति त्र्यक्षरलान्ताः ।

गण्डशैलः कपोले च द्रोणपाषाणभेदयोः ।
महानीलो भृङ्गराजे मणिनागविशेषयोः ।
उत्कोचेऽस्त्री कटफलः कर्मशीलस्तु कर्मठे ।
अनुकूलस्त्वनादेशे विधेयेऽनुगुणेऽपि च ।
महाबली दैत्यभेदे बलवत्यपि कथ्यते ।
वनपङ्क्तौ विष्णुदाम्नि वनमाला प्रकीर्तिता ।
गोलाङ्गूलः कृष्णकपौ पशुपुच्छे नपुंसकम् ।
तृणशालो राजताल्यां वेणौ रतिकिलः शुनि ।

इति चतुरक्षरलान्ताः ।

---

1706. BE चक्षते for चष्यते
1707. AD कुकुल; E कुकूलं. B श्वभ्रे न तु तुषाल्ये for post. half
1708. CE निर्णिक्ते for °र्णीते CDE केवलमति
1711. AD कुबल्ये, E किसलय. CE कराले
1713. E प्रोक्तम्
1716. B om line 1716. Cf. notes.
1717. A गडे, B दड- for गण्ड-.
1718. D om. line 1718. E महानिलो
1721. CDE बलवन्तेपि, a peculiar word
1723 Mss. गोलाङ्गूल. E °पशौ for °कपौ
1724. Cf. notes

वः पुमान्सान्त्वने वायौ संयमे वरुणे स्मरे ।
वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये ।
विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि ।
विट् पुरीषे जने वैश्ये क्रमात्पुंसि द्वयोः स्त्रियाम् ।
स्वोऽस्त्री धने पुमाञ्ज्ञातौ त्रिष्वात्मीये स्वमात्मनि ।
स्वः स्वर्गे परलोके च त्विट् कान्तिज्वालयोः स्त्रियाम् ।
वल्के लवङ्गवल्के त्वग्द्वार्द्वारोपाययोः स्त्रियाम् ।
रमायां देवपूजायां शक्तौ शोभावरेण्ययोः ।

इत्येकाक्षरवान्ताः ।

भवः संसारसंतप्तिश्रेयःशंकरजन्मसु ।
उपादाने भस्मनि च सत्ताप्राप्त्योश्च वत्सरे ।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ।
रतिवेगे शब्दवृत्तौ निमित्ते रसबन्धिनि ।
प्राप्तौ च भवसंबन्धे योनौ च स्याद्विकल्पने ।
त्रिषु भं भामवति भे (?) प्रभावे च पुमान्भवेत् ।
नवस्तु नूतने सौम्ये संख्यायामपि तत्त्रिषु ।
सूर्ये समुद्रतरणौ पटे नावा स्त्रियामपि ।
जीवो वृक्षे सुरगुरौ तन्तौ प्राणे च जीविते ।
जीवा जीवन्तिकाभूम्योर्वचामौर्व्योस्त्रिषूच्यते ।
धवः पतौ नरे धूर्ते धूतपादपयोरपि ।
हवो यज्ञे तथाह्वाने स्यान्निदेशाज्ञयोः पुमान् ।
ध्रुवः कीले शिवे शङ्कौ वंशे योगे वसौ मुनौ ।
निश्चिते निश्चले तर्के नक्षत्रे शाश्वते वटे ।

---

1729. Mss. read स्वे for स्वो. CD त्रिष्वात्मीये
1731. B वल्कलेवंक°
1732. Cf. notes. A रामाया
1733. AD °सतप्त-
1735-6. = *MED*. 159-20-1
1735. E °चेष्टास- for °चेष्टात्म-
1736. E °जन्मसु for °जन्तुषु
1741. AE नाव-; B वानरा for नावा
1744. पतौ a wrong form
1745. E ह्वा for हवो
1746. E शिव for वंशे Mss. वसे for वसौ
1747. AB पटे for वटे

सुचि मौर्व्यां तालभेदे स्त्रियामथ शिवं शुभे ।
मोक्षे सुखे च सलिले माने योगे मनोहरे ।
शिवो हरे गुग्गुलौ च कीले चालुकि (?) वालुके ।
पुण्डरीकद्रुमे स्त्री तु भवान्यां जम्बुकेऽपि च ।
अभयायां नदीभेदे चामलक्यां महौषधौ ।
झाटाशम्योश्चाभयायां चाथ देवः सुरे घने ।
राज्ञि क्लीबं त्विन्द्रिये स्त्री तेजनीस्पृक्कयोरपि ।
भट्टारिकाया द(दा ? )र्वी तु देवदारुहरिद्रयोः ।
सुचि दारुहरिद्रायां सत्त्वं द्रव्ये बले गुणे ।
स्वभावे च पिशाचादौ व्यवसायेऽपि प्राणिषु ।
चित्तसद्भावयोर्जन्तावैश्वर्यामोदयोरपि ।
विश्वं समस्ते जगति विश्वेदेवेषु नागरे ।
वा पुंसि स्यात्स्त्रियां विश्वातिविषाकरशब्दयोः ।
द्वंद्वं रहस्ये कलहे युग्मे पात्रप्रसाधने ।
दिवं स्वर्गेऽन्तरिक्षे च लवो रामात्मजे कुशे ।
विनाशे छेदने दावदवौ वनवनानलौ ।
नीवी स्याद्बन्धनागारे धने स्त्रीवस्त्रबन्धने ।
अविर्गिरौ रवे मेषे मूषिके कम्बलेऽपि च ।
पूर्वोऽन्यलिङ्गः प्राचि स्यात्पुं बहुत्वेऽपि पूर्वजे ।
प्लवो भेके कपौ वर्षे नावे चेवेत्थमर्थयोः ।
एवं चाथ युवो वर्षभेदे यूनि पुमान्भवेत् ।

इति त्र्यक्षरवान्ताः ।

कैरवः कुमुदे क्लीबे पुंसि स्यात्पिशुनेऽपि च ।
सुग्रीवस्तु सुकण्ठे च वालिभ्रातरि कथ्यते ।

---

1748. C सुचिमौर्व्यां, D सचीमौर्व्यां, E सूचि-मौञ्ज्या
1750. AB हरौ for हरे. A चालिकि
1754 AD blank; B च for स्त्री
1756. E सूचिदारु°
1758. A चित्तस्वभावयोर्
1760. A विश्वत्रि° for विश्वाति°
1763 E °वनानिले
1769 E कैतवे for कैरवः. B कुमुदे for पिशुने
1770. E सुकर्णे for °ण्ठे

**गन्धर्वस्**तुरगे दिव्यगायके शेखरेऽपि च ।
अन्तराभवसत्त्वे च मृगे पुरुषकोकिले ।
**प्रभवो** जन्ममूलेऽब्दे जन्मभूमौ पराक्रमे ।
आद्योपलब्धौ ज्ञाने च **विभवो**ऽब्दे धने वृतौ ।
**पल्लवो**ऽस्त्री किसलये शृङ्गारपदगर्भयोः ।
पवने विटपे छिद्रे रत्नविस्तारयोरपि ।
**कितवो** धूर्त उन्मत्ते वञ्चके कनकाह्वये ।
**प्रसवस्**तु फले पुष्पे प्रभवे गर्भमोचने ।
**माधवस्**तु वसन्ते स्याद्वैशाखे गरुडध्वजे ।
**आहवो** युद्ध आह्वानेऽध्वरे होमनिदेशयोः ।
**निह्नवस्**तु नमस्कारे विश्वासेऽपह्नवेऽपि च ।
निकृतौ चाथ **सचिवः** स्यात्सहाये च मन्त्रिणि ।
**उत्सवः** प्रसवेच्छाका( ? )मर्षोत्सेधमहःसु च ।
**द्विजिह्वः** सूचके सर्पे **पार्थिवो** हायने नृपे ।

इति त्र्यक्षरवान्ताः ।

**अनुभावः** प्रभावे च सतां च मतिनिश्चये ।
**घण्टारवः** शणसुमे घण्टानादे च पुंसि वा ।
**पराभवः** प्रभावे च वर्षभेदेऽपि वर्तते ।

इति चतुरक्षरवान्ताः ।

इति राघवीयनानार्थमञ्जर्यां यवर्गादिवर्गान्ताः परिसमाप्ताः ।

**शः** परोक्षे त्रिलिङ्गे स्याच्छं सुखार्थाज्ञशक्तिषु ।
**शिः** शिवे शिवकान्तायां स्वापे निर्वाणहिंसयोः ।

इत्येकाक्षरशान्ताः ।

---

1774. AD ऽयने for धने वृति. ( = निर्वृति;?)
1176. BE भवेन for पवने
1783 AD °वेच्छाखामर्षो°, B °वेच्छाखाकर्षो°; cf. notes. ABD °महस्सु
1784, E सूत्रके for सूचके
1785. E रतिनिश्चये
1787. Col. E वीरराघवीय° for राघवीय°. BCE अन्तस्थान्तवर्गा, for यवर्गादिवर्गान्ताः
1788. After this line should come l. 1732

**दशा** वर्तावस्थायां वस्त्रान्ते समयेऽपि च ।
**पाशः** क( के ? )शान्ते संघार्थे कर्णान्ते शोभनार्थके ।
छिद्राद्यन्ते च निन्दार्थे पुमान्पक्ष्यादिबन्धने ।
पलायने च रज्जौ च निधानावु( ? )पलम्भयोः ।
**वशः** प्रभुत्वेच्छायत्तगजेषु त्रिषु तद्वति ।
स्ववशायां वशायां च स्पृहायां च जनेऽपि च ।
**वशा** वन्ध्यासुतायोषाज्ञानिकुञ्जरनारिषु ।
**वंशः** पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले ।
नासादण्डे चाथ **कुशं** जले दर्भान्तरे नपुम् ।
योक्त्रे रामात्मजे द्वीपे पुमानौदुम्बरे स्त्रियाम् ।
छन्दोगस्तोत्रगणनाशङ्कास्वथ **कुशी**ष्यते ।
पापिष्ठमत्तयोर्वाले भल्लायामयसि स्त्रियाम् ।
**केशो** दैत्ये भगे वाले ह्रीबेरे च प्रचेतसि ।
**कोशो**ऽस्त्री मुकुले दिव्ये शस्त्रार्थौघे गृहे तिथौ ।
शिश्ने जातिफले खड्गपिधाने योनिवित्तयोः ।
**काशः** साम्ये दर्भभेदे प्रकाशेऽपि पुमानयम् ।
**आशा** दिग्भूम्याप्तितृष्णास्वथ **राशिस्तु** पुंसि च ।
मेषादौ द्रव्यबाहुल्ये **विशो** वैश्ये नरे द्वयोः ।
**स्पशस्तु** चारे संग्रामे भीमरे पवनेऽपि च ।
बाधने प्रणिधौ शुद्धे पुंसि **प्राश** उपाङ्गके ।
**निशा** रात्रीशारिबयोरश्वादेस्ताडने **कशा** ।

इति त्र्यक्षरशान्ताः ।

**प्रकाशो**ऽतिप्रसिद्धे स्यादातपे कोशवत्यपि ।
प्रहासेऽथ **पलाशस्तु** हरित्किंशुकयातुषु ।

---

1791. B करांते for क[के?]शान्ते. C कण्ठार्थे; E कर्णार्थे for कर्णान्ते
1793-6 E om. these lines
1796. °नारिषु (metrical shortening?)
1802. E ह्रीवेषे for ह्रीबेरे
1803, cf, line 1844. BC ग्रहे for गृहे
1805 ACD सौम्ये for साम्ये
1806 A वा for च
1808 A भीमरूपवने
1809. B प्राश, E प्राशु for प्राश
1810 CE कशौ for कशा
1812. CDE प्रहसे

पत्रे नपुंसि **कलशः** पयस्यमृतमन्द्रयोः ।
घटे **निवेशः** शिबिरे वाहन्यासगृहेष्वपि ।
**कीनाशस्तु** यमे पुंसि क्षुद्रकर्षकयोस्त्रिषु ।
उपांशुघातिनि कर्कशे **निदेशस्तु** भाषणे ।
शासनोपान्तयोश्चाथा**भीशुः** प्रग्रहरश्मिनोः ।
**विमर्शः** साध्वसाधुत्वविवेकेषु प्रशस्यते ।
**कर्कशः** कठिने क्रूरे कृप(पा ?)णे निर्दये दृढे ।
आयुर्वेदे द्रव्यभेदे कृष्णेक्षौ खर्वकाण्डयोः ।
अपीवरे साहसिके **निस्त्रिंशः** क्रूरखड्गयोः ।
**निकाशस्तु** प्रकाशे स्यात्सदृशे रहसि स्मृतः ।
**निर्वेशो** भोगभृतयोः शिशावज्ञेऽपि **बालिशः** ।

इति त्र्यक्षरशान्ताः ।

**जीवितेशः** पतौ काले जीवातौ जीविताधिपे ।
**उपस्पर्शः** स्पर्शमात्रे स्नानाचमनयोरपि ।
**अपदेशः** पदे लक्ष्ये स्यात्प्रसिद्धनिमित्तयोः ।
औदार्यशौर्यधैर्येषु निःसीमव्यपदेशयोः ।
**आश्रयाशो** वीतिहोत्रे पुमानाश्रयबाधके ।
**लतावंशस्तु** वेत्रे स्याद्वल्लीसंघेऽपि च त्रिषु ।

इति चतुरक्षरशान्ताः ।

**षः** पुमान्विषये स्वर्गे **षा** श्रियां **षं** विरामके ।
गर्भमोक्षे मर्षणे च परोक्षश्रेष्ठयोस्त्रिषु ।
**त्विड्दीप्तौ** व्यवसाये च जिगीषायां च धन्वनि ।

इत्येकाक्षरषान्ताः ।

---

1813. A °मदरयोः, B °मंदिरयोः
1814. BCD °ग्रेहेष्वपि
1815. B अपि for त्रिषु
1816. E°घातिनी(metrical lengthening)
1817. ABCD °रश्मयो. for °रश्मिनो.
1821. Some Mss. निस्तृशः
1822. AD स्मृतौ, BE स्मृतं
1824. AD जीवाते; B जीवतु; CE जीवांतौ for जीवातौ, supported by *AS.* and *VL.*
1830. E सर्गे for स्वर्गे. CDE षां for षं
1831. B अपि for त्रिषु

**वृषो** धर्मबलीवर्दश्रेष्ठमूषिकराशिषु ।
शुक्रले च पुमान्स्त्री तु कपिकच्छ्वाटरूषयोः ।
सुरसंघेऽक्ष्णि जिष्णौ च तुरंगे जलजेऽपि च ।
शृङ्ग्यामपि **वृषा** स्त्री स्याद्व्रतिनामासनं **वृषी** ।
**कर्षूर्वार्ताकरीषाग्निलेखनेषु** च खातने ।
कुल्यायां तु **कर्षू** चाथ **कर्षस्तु** कर्षणे फले ।
**वर्षस्तु** वृष्टावब्दे स्याल्लोके धान्यंशमेघयोः ।
क्लैब्यजम्बूद्वीपयोश्च **विषं** गरलवारिणोः ।
**उषा**निरुद्धपत्न्यां च कालभेदेऽपि पुंसि वा ।
**प्रेषः प्रैषः** प्रेषणे स्यान्मर्दनोन्मानमानयोः ।
**श्लेषः** स्यादुभयार्थे च अलाताङ्गारयोः पुमान् ।
**कोषो**ऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।
**दोषः** स्याद्दूषणे पापे **दोषा** रात्रौ भुजेऽपि च ।
**शेषो**ऽप्रधानेऽनन्ताख्ये त्रिषु स्यादवशेषिते ।
**शेषा** प्रसादनिर्माल्याक्षतादानेषु तु स्त्रियाम् ।
तूष्णीमर्थे सुखे **जोषं** पुण्यकालाब्दयोर्विषुः ।

इति त्र्यक्षरषान्ताः ।

**महिषी** राजपत्न्यां च महिषस्य च योषिति ।
**पुरुषो** मानवे सांख्ये ज्ञे च पुंनागजीवयोः ।
पुराणपुरुषेऽपि स्यान्नृमाने **पौरुषं** त्रिषु ।
पुंभावे तत्क्रियायां च प्रभावे संततावपि ।
**आमिषं** सुन्दराकाररूपादिविषये भवेत् ।
संभोगलोप(भ?)योर्मांसे पुंसि चोत्कोचलाभयोः ।
पारावारे च कनके **निकषात्म**(षोश्म)परीक्षके ।

---

1834. Mss. °कच्छाट°
1836. E व्रसी for वृषी
1837. AD घातने
1838. E च for तु. Mss. read कषू for कर्षूश्.
E कर्वस्तु कषणे फले for post. half
1842. B मर्दने मान°. ABD °मारयोः for °मानयोः
1843. CE आलाता° for अलाता°. B °केपि च; CE lacuna for °योः पुमान्
1844. ABCD रोषो for कोषोः cf. line 1803
1847. ADE प्रधान– for प्रसाद–
1855. E पारावत्ते for पारावारे

**अभीषुः** प्रग्रहे रश्मौ **त्रिषेशो**ऽवयवे नवे ।
निखिलातिशयाऽव्यक्तद्रष्टव्योत्तमवस्तुषु ।
**उष्णीषस्तु** शिरोवेष्टे किरीटे पुंनपुंसकम् ।
**आकर्षः** शारिफलके द्यूतेऽक्षे कार्मुकेऽपि च ।
**किल्बिषं** त्वपराधे स्यान्नपुंसि दुरिते रुजि ।
**शुश्रूषा** श्रोतुमिच्छायां परिचर्याप्रधानयोः ।
**शैलूषो** दारजीवे स्यात्किराते नटबिल्वयोः ।

इति त्र्यक्षरषान्ताः ।

सुरे मत्स्ये **चानिमिषो नन्दिघोषो** रथे पुमान् ।
अर्जुनस्य च शङ्खे च वृषभेन्द्रस्य गर्जने ।
**आत्मघोषो** वायसे स्यादात्मस्तुतिपरेऽपि च ।

इति चतुरक्षरषान्ताः ।

**सः** पुंस्युमासुते वायौ देहभाःश्रीद्रुवाजिषु ।
**सं** पक्षिस्यन्दने क्लीबे ज्ञाने ध्याने निवारणे ।
**सू** प्रेरणे गर्भमोक्षे **से**ऽभिधेये च सेवने ।
**सत्**सत्ये विदुषि श्रेष्ठे साधौ क्लीबमुडौ त्रिषु ।

इत्येकाक्षरसान्ताः ।

**हंसः** सूर्ये मरालेऽश्वे यतौ च परमात्मनि ।
श्रेष्ठे निर्लोभनृपतौ शारीरमरुदन्तरे ।
मत्सरे मन्त्रभेदे च विष्णौ राजादिपूर्वके ।
**हिंसा** चौर्ये ताडने स्यादन्योपद्रवबन्धयोः ।
**वेधाश्च**तुर्मुखे विष्णौ पण्डितेऽपि प्रचक्ष्यते ।

---

1861. AD °वृधानयोः; C °वृधानयो for °प्रधानयोः (प and व, and घ and ध are indistinguishable in Grantha script)

1863 ABD om lines 1863–5. C नमि° for नान्दि°

1868. E प्रेषणे for प्रेरणे

1869 B सदसि for विदुषि

1874. B प्रचक्षते, D प्रवक्ष्यते

